CHUNILAL GANDHI VIDYABHAVAN, SURAT

*Shastri Dinmanishankar Pustak-Bhandara*

No.: 106 Subject: Campū kāvya.

Title: Viśvaguṇādarśa

Author: Veṅkaṭādhvarin Scribe: Anantatanaya

Date of the work: — Date of the Ms.: Śaka 1774

Place of the work: — Place of the Ms.: Bombay

Size: 12·2" by 4·2" Extent: foll 50 + 2.

Language: Sanskrit. Script: Devanāgarī.

Remarks: Complete. Printed in Bombay.

अथविश्वगुणादर्शः प्रारभ्यते.

विश्वगुणा॰ १

सूर्यवर्णनं

श्रीगणेशायनमः श्रीराजीवाक्षवक्षस्थलनिलयरमाहस्तवास्तव्यलोलल्लीलाम्भोजान्निःसरंतीमधुरमधुझरीनाभिपद्मेमुरारेः अस्तोकं
लोकमात्राद्दृशिसुखशिशिरानननेवर्ष्यमाणंशंखप्रांतेनदिव्यंपयइतिविबुधैःशंक्यमानापुनातु १ कांचीमंडलमंडनस्यमखिनःकर्नाट
भूभृद्गुरोस्तातायस्यदिगंतकांतयशासोयंभागिनेयंविदुः अस्तोकाध्वरकर्तुरप्पयगुरोरस्यैषविद्वन्मणेःपुत्रःश्रीरघुनाथदीक्षितकविःपूर्णो
गुणैरेधते २ तत्कृतस्तर्कवेदांततंत्रव्याकृतिचिंतकः व्यक्तंविश्वगुणादर्शंविधत्तेवेंकटाध्वरी ३ पद्यंयद्यपिविद्यतेबहुसतांहृद्यंविगद्यंन
तद्गद्यंचप्रतिपद्यतेनविजहत्पद्यंबुधास्वाद्यताम् आधत्तेहितयोःप्रयोगउभयोरामोदभूमोदयंसंगःकस्यतुनस्त्वदेतमनसोमाध्वीकमृद्वीक
योः ४ विश्वावलोकस्पृहयाकदाचिद्विमानमारुह्यसमानरूपम् कृशानुविश्वावसुनामधेयंगंधर्वयुग्मंगगनेचचार ५ तत्रतु कृशा
नुरकृशासूयःपुरोभागिपदंगतः विश्वावसुरभूद्विश्वगुणग्रहणकौतुकी ६ अथपुरतःसमापतंतमरविंदबांधवमवलोकयन्नवंदतैनमा
गमसागरपारदृश्वाविश्वावसुः ब्रह्मचर्यव्रतोत्सर्गगुरवेकोकसंततेः छायाविवेकलोलायछांदसज्योतिषेनमः ७ कृशानुः सखेकथंस
कलभुवनशोषकारिणंतपनमपिनमनकर्मीकरोषि पश्य पांथान्दीनानहहवसुमानातपांधान्विधत्तेशुष्कांपृथ्वींरचयतितरांशोषय १

१बहु. २ब्रह्मणः ३मधु. ४द्राक्षी. ५दोषदृक्. ६सूर्य. ७जलं ८क्षयरोगः

त्योषधीश्च कासाराणांहरतिविभवंक्रांतशांतिप्रदानांक्रूरस्यैवंगुणलवकथाकास्वतोभास्वतोऽस्य ८ विश्वावसुः किमरेभगवंत
मरविंदबांधवमपिविनिंदयसि शृणुपुरोभागिन् दृष्टिंधृष्टिभिरारचय्यजगतस्तुष्टिंसरीसर्ष्टियःपुष्टिंद्राग्विशिनष्टिहृष्टिपुनॄणांध्यानं
पिनष्टिस्थिरम् भाज्ञानामपवर्गमार्गदममुंपद्मागृहोल्लासिनंकोनस्तौतिसमस्तलोकसुहृदंद्योभूषणंपूषणम् ९ किंच यदानपश्यंतित
मोविमर्दिनंरविंजनास्तत्कथयंतिदुर्दिनम् धनोत्यसौदेहभृतांसरोगतांधिनोतिचांभोजततिंसुरोगताम् १० अपिच आशापालेषुपा
शायुधयमबलभिन्मारुतेशादिकेषुप्रायोभूयःसुजाग्रत्स्वपिचशफचितयाभासुराभूसुराद्याः यस्मैकालत्रयेपिप्रतिदिवसममीकुर्वतेर्घ्यप्रदा
नंसैषात्रैय्येवविद्यातपतिरविमयीसर्वलोकान्पुनाना ११ कृतत्रिदशपोषणंकृशरथांगसंतोषणंपिशाचकुलभीषणंप्रथुतमश्छटापेषणम्
विनम्रगदशोषणंविहितवारिजोन्मेषणंनमस्कुरुतपूषणंननुनभस्थलीभूषणम् १२ विश्वावसुर्विभावसुमभिष्टुवन्प्रांजलिः कृशानुना
सहह्लादशात्मानंसमयागमयामास विमानमानमय्यतद्बिंबमध्यधामानमतिमानमहिमानंपरमात्मानम् प्रशस्तगुणसिंधवेप्रपदनस्पृशांबां
धवेस्वतोपहतपाप्मनेसकलदेहिनामात्मने नमःकमलवासिनीनयनसौख्यसंधायिनेतमःशमविधायिनेतरणिमंडलस्थायिने १३ पुनःस

८ कमल ९ कासारसंबंधिनीम् १०. निकटमनैषीत् ११ अतिशयमहिमानम्.

भक्त्युन्मेषम् भानु[१२]भानुदलदब्जलोचनं भक्तलोकभवपाशमोचनम् धाम तामरसवासिनीसखं हेमवर्णमिह सौति मे सुखम् १४ कु॰
किमरे केवलं निर्घृणोऽपि नारायणो भवताविवेकलाभवतापि स्तवनभाजनी क्रियते तथाहि स्वेनादौ सकलं जगद्धि रचितं स्वेनैव संर
क्षितं भिंदन् हंत मुकुंद एष विधृतानंदो हि निंदोचितः उत्पाद्य स्वयमुत्तमान् फलतरून् उल्लास्य चारूदकै रुन्मत्तोऽपि किमुच्छिनत्ति जगति
छित्वापि किं नंदति १५ किंच स्वानुज्ञामनवाप्य दर्पभरतः स्वाज्ञां विलंघेत यस्तस्यैवेह तनोति लौकिकनृपश्चंडोऽपि दंडं रुषा अंतर्याम्य
पथे प्रवर्त्य भविनो हंत स्वयं नारके यस्तान्पातयति क्रुधा स तु न किं नारायणो निर्घृणः १६ वि॰ अहो तव मतिरतिस्थूला यतः परमका
रुणिकं भगवंतं पंकजवासिनीप्राणनाथमपि स्पृशतीति तवोपलंभः आकर्णय चिराय संसृत्युदधौ समज्जनं नमज्जनं मज्जन्न इत्यधोस
जः दयापयोधिः परिगृह्य दुर्लभं निजं पदं प्रापयति स्वयं प्रभुः १७ किंच लीलालोलतमां रमामगणयन् लीलामनालोकयन्मुंचन्किंचम
हीमहीश्वरमयं मंचं हठाद्वंचयन् आकर्षन् द्विजराजमप्यतिजवाद्धा हंत लोकांतराद्राग्धुं शौरिरुदित्वरस्त्वरमुदैद्ग्राहग्रहार्त्तं गजम् १८ अ
पिच वैकुंठे महताहताखिलमहारंभं मदेनोच्चकैश्चंडं खंडयितुं हिरण्यकशिपुं वेतंडमुत्कंठया सैंहं वेषमशेषभीषणमहो गृह्णन्स्वरागो

१२ सूर्यकिरणविकसितकमललोचनम् १३ जडा.



रवात् प्रल्हादव्यसनासहिष्णुरुदगादाकुंठकंठीरवः १९ अन्यच्च अवेमव्यापाराकलनमतुरीस्पर्शमचिरादनुन्मीलत्तंतुप्रकरघटना
पासमसकृत् विषादस्तांचाली विपदपनयैकप्रणयिनः पटानां निर्माणं पतगपतिकेतोरवतु नः २० अपरंच काकः शोकं व्यसृजद
भितं स्वेद्गृध्रोऽप्यनेकान् लोकानलेभे कुशलमगमन्निर्विषादं निषादः राज्यं प्रापौ कपिनिशिचरौ राघवत्वे मुरारेः पारेवाचां जयति करुणा
पद्मपद्मासखस्य २१ तदेवं देवपरिवृढे तस्मिन् दयापयोधावप्युपन्यस्तम् नैर्घृण्यं तव तावदनैपुण्यमपुण्यफलं बुद्धेः पिशुनयति
शृणु तावत् जीवानां हृत्पद्मामिवत्त्वमिपतां स्वर्गापवर्गावहं देहं दत्त्ववति श्रियःप्रियतमे नैवोपकारस्मृतिः दुःखजातु निदागते स्वकलिताद्
कर्मणः पक्ष्मिनान्नाथे हंत निरागसि व्यसनिभिर्नैर्घृण्यमारोप्यते २२ हंत जंतवः पामराः स्वापराधं परमकारुणिके तस्मिन्ब्रह्मण्यध्यस्यं
ति क्लेशत्यागकृते पितेन करणव्यूहेन देहेन च स्वानर्थवत जंतुराजंयति चेन्मंतुर्नियंतुः कुतः शस्त्रेजगुजयाय नेजगुरुणा दत्तेऽथ तेनैकचे
त्सुतो हंति निजं वपुः कथयरे तत्रापराधी तु कः २३ किंबहुना शास्त्रं भूरि निजस्वरूपनतये स्वाराधनार्थं वपुः स्वध्यानाय मनश्च शुद्धिमनघां
लब्धुं च तीर्थादिकान् तत्तान्यप्युपदेष्टुमुत्तमगुरून्दत्वानुगृह्णाति नः संसारे तदपि भ्रमेम यदि किं कुर्वीत सर्वेश्वरः २४ इति परिक्रामन् कंचि

१ द्रौपदी २ विष्णोः ३ इंद्रकाकः ४ जटायुः ५ श्रेष्ठे ६ नैर्घृण्यम् ७ अपराधः

दंतरमुपसृत्याधस्तादवलोक्यच सखेसकलपुरुषार्थसाधनानुष्ठानहेतुभूतंतावदवलोकयभूलोकम् सबहुमानम् स्वर्गौकोभिरदोनिवा
सिपुरुषारब्धातिशुद्धाध्वरस्वाहाकारवषट्क्रियोत्थमभृतंस्वादीयआदीयते आम्नायप्रवर्णैरलंकृतिजुषेऽमुष्येमनुष्यैः शुभैर्दिव्यक्षेत्रस
रित्पवित्रवपुषेदेव्यैपृथिव्यैनमः २५ कृ० सखेनाकगतोपिभवान्नमध्यलोकंनमस्कर्तुमर्हति जननमरणस्वाधिव्याधिप्रभेदशुभेन
राकलनमलिनालोकाःशोकातुराश्चभुवंगताः तदिहमदिभिःक्षुद्रैश्छिद्रैकमार्गणतत्परैः प्रभुभिरुदितसत्योक्षित्यैबुधःस्पृहयेतकः
२६ बालत्वेवातरुणिमनिवाप्रायशोवार्धकेवामृत्वामर्त्याबतयमभटैर्बध्यमानाव्यथंते श्रेयस्तेषाममितविपदांजीवतांवाकिमास्तेकस्मि
न्ग्रामेपुनरनुदुहांकर्षणक्लेशहानिः २७ वि० सत्यंतथापिमास्मसखेमत्याश्रयंमानुषंजन्मद्विषः रामःक्षेमस्यदाताभुविनतुमनुजो
रावणस्यप्रहर्त्तातत्तातःकिंनमर्त्यस्त्विदक्ष्वाकुलपतेर्दैत्ययुद्धेसहायः कृष्णोवृष्णोर्मुदंयोहरतनरतयानश्रुतःकिंत्वयासौकेवादेवाःप्रभा
वास्स्वयमतिशयितामानवाद्दानवावा २८ किंच मांधाताचभगीरथश्चसगरोमान्यःककुत्स्थोरघुःपूरुःसोऽपिपुरूरवाःसचशिबिःपु-
ण्यश्चरुक्मांगदः वैदेहोनहुषश्चहैहयपतिर्वीरोययातिर्नलःपार्थश्चेतिनृपाःप्रशस्तयशसःप्रादुर्बभूवुर्नकिम् २९ कृ० साधांगीकारम् 

१ यज्ञशेषं २ मंत्रैः

कामंजनाःकेपिगुणाभिरामाः क्ष्मातलेसंतियुगांतरेषु कलौयुगेऽस्मिन्गुणलेशवंध्याःसर्वेपिसर्वेतरदोषभाजः ३० मंदेतरस्मरमली
मसमानसानांमन्युस्पृहादुरभिमानमदास्पदानाम् कालेकलौकलुषतःकलितोदयानांदोषायदृष्टिरपिहंतदुरीश्वराणाम् ३१ वि० त
थापिसर्वेकलिकालिकाअपिमानुषानदूषणीयाः यतः सर्वकालमपिसंत्येवसाधवः पश्य दुरितभरितक्षोबस्थापप्रसादनिरादराःकम
लनयनस्वैरक्रीडागृहायितसद्गुहाः निगमपदवीनिर्वाहायक्षिताबुदिताःस्वयंकतिनकतिनःसंदृश्यंतेकलावपिनिर्मलाः ३२ अथवा
यदितेमदीयेवचसिनविश्रंभसंभवस्तर्हितत्रतत्रसंचारमास्वयत्तगुणप्रदर्शनंकरवाणीतिविमानमग्रतःस्थापयन्अंगुल्यानिर्दिश्य इ
दंबदरिकाश्रमस्थलमिहैषनारायणस्तपस्यतिनमस्यतांस्थिरतरंतमःशोषयन् विकासिधिषणोन्मिषद्विषयवर्जनाःसज्जनाजनार्दनमह-
र्निशंभुजगमंचमंचंत्यमी ३३ कृ० सखेत्वत्रगुणवत्तासमर्थनंनरोचतेमत्यम् यदत्रजागर्त्तिशिलासमंहिमंसुशीतलागंधवहाश्वदुःसहाः
जलावगाहाच्चकितोजनस्ततःकुतस्त्वनुष्ठास्यतिकर्मनिर्मलम् ३४ वि० अस्मदनुकूलमेतद्भवतिभवदुक्तम् परमेहिमयुतत्वात्प्राप्तवैकुं-
ठसाम्यंपदमिदमुपयाताःपंडिताःशांतिमंतः मुहुरिहसमयेषुस्नानहेतोःसरोगास्तदपिभृशमरोगास्तार्क्ष्यकेतोःप्रसादात् ३५ इतिवि-

१ महत्तर. २ परमहिमोविष्णुः — पक्षे अतिशीतम्.

यानमन्यतः प्रस्थाप्य सांजलिबंधम् साकेतायनमः पुरायभवतु स्तोकेतरश्रीजुषे नानादोषमुषे तदंतरजुषे देव्यै सरय्वै नमः येभीत
त्तटभूमिषु प्रविलसद्रूपाश्च यूपास्थितास्तेभ्यो भानुकुलीनकीर्तिलतिकोपघ्नाथितेभ्यो नमः ३६ पुनः पुनर्निरीक्ष्य समंततुच्चैषम् भव
सागरशोषणेन पेश्यच्चरणांतेः पुरजीवनौषधेन रजसा रघुनाथपादभाजा रचितांहः प्रशमामिमानमामि ३७ पुनः सानुस्मरणरो
मांचम् कल्याणोल्लाससीमा कलयतु कुशलं कालमेघाभिरामा कान्चित्साकेतधामा भवगहनगतिक्लांतिहारिप्रणामा सौंदर्याक्रीणेका
माधृतजनकसुतासादरापांगधामा दिक्षु प्रख्यातभूमादिविषदभिनुतादेवताराम नाम्ना ३८ दशाननकुशासनत्रसदशेषलोकव्यथा
विलोपकररोपकोवसुमतीसुतावल्लभः कृपारसमपारसंसृतिपयोनिधेस्तारकं कृपीष्ट सुकृपीष्टकृतत्कृपणतेकतानेमयि ३९ अपिच
सजयतिचित्रचरित्रो यस्यहि वरचरणपुष्करकरेणुः महिषीमृषिसिंहस्य प्राजीजनदपिदृषोदयेहेतुः ४० श्रेयांसि भूयांसि महावदान्यः
प्रेयान् सदेयाज्जनकात्मजायाः काकायकंकायच योदितेष्टं दाशायकौशायचराक्षसाय ४१ अपिच अभीष्टघटकः क्षितावतुलदीप्ति

१ आश्रयदंडवत् संजातेभ्यः २ पश्यंतोचरणौयस्येति तथाविधो गौतमः नदंतः पुरं अहल्या तज्जीवनं पाषाणलनिरासपूर्वकमानुषीकरणं तत्र औषधरूपम् ३ लज्जितः ४ कुर्यात् ५ रु
षिर्विशेषो गौतमः ६ वृषः सुकृतं ७ अभीष्टजनकः पक्षे अभीष्टोघटकः कुंभोयस्य ८ अतिकांतिको दंडवान् पक्षे अतुलदीप्तिकः दंडभाक् इतिच्छेदः ९

कोदंडभागिति क्षमभिदं पुनः परममद्भुतं ब्रूमहे विधूनपरमार्निकोविघटितारिचक्रः स्वयंसकुंभजेनकंभप्रभुः शकलयांबभूवक्रुधा ४२
रु० कथंनामरामभद्रमनुचितकर्माणमप्येवमीडिषे वर्षीयानपि जानकीसहचरो मातुः सपत्न्याः सुदेसंपन्नं रथहस्तिपत्तितुरगैः संत्यज्य
राज्यंनिजम् विंदन्हंतघनंवनं कथमसौनस्यादयुक्तक्रियोगव्यं दुग्धमपास्य पास्यति जनः कोवायवागूरसम् ४३ किंच धिक्कृत्यैवदशा
स्यदर्पदमनं धीशालिनं वालिनं सोयंराक्षसवर्गनिग्रहकृते सुग्रीवमन्वग्रहीत् तुंगप्रस्तरभंगलिप्सुरिह भिः शंकंतु टंकंत्यजन् संकल्पं क
लयेत पंकजदलादानप्रसंगाद्रुकः ४४ कृत्वा सेतुं किल जलनिधौ खंडयित्वा दुरध्वान् लब्ध्वा देवीं स्फुटविदितसंशुद्धिमग्निप्रवेशात्
भूयोप्येनां भुवनजननीं भूमिकन्यामनन्यामंतर्वत्नीमनयत वनं हंतपौलस्त्यहंता ४५ वि० सरवेगुणेषु दोषाविष्कारं कथमारचयसि
गुरावसत्योक्तिनिरासहेतोः स्वराज्यमग्र्योपि सरामचंद्रः तृणाय मेने निपुणायतेन फणाभृदीशोपिफणायितुं तम् ४६ किंच वालि
निबलोर्मिमालिनि जाग्रनि सुग्रीवमग्रहीद्यदयम् अस्यश्रुतिशतविहितं सख्यं कृतेन दीनबंधुत्वम् ४७ किंच लक्ष्मीं वक्षसि बिभ्र
दप्यविरतं रामाकृतिः श्रीपतिर्वेत्तिं कामपिमानुषीमभिनयन् वीराग्रयायीप्रियाम् कल्याणीं तु वनीमनीनयदहोकस्याप्यमृष्यन्वटी

१ परमपीडा पक्षे मृत्तिकाकारः २ शत्रुसमुदायः पक्षे आराविशिरंन्नक्रम् ३ रावणः कुलालश्च ४ कांजी ५ सीता ६ रावणः ७ समर्थोभवति ८ स्तोतुं ९ अरण्यं

चोमेदिन्यामवलोकितः किमपरोमानीपुमानीदृशः ४८ वस्तुतस्तु गातुं कईष्टे श्रितरामभद्रान् गणानूगुणानांगणनादरिद्रान् प्राचे
तसाद्याः कवयोनवद्याः यदेकदेशाकलनेपिनेशाः ४९ तथापि तदीयगुणार्णवकणानामेकदेशलेशकोटितमांशकलामात्रमि
दमत्रभवतांश्रोतव्यम् काकुत्स्थकुलपर्यायकूलशेशार्णवकौस्तुभः कौसल्यासुकृतव्रातकल्पकप्रसवोदयः ५० प्रौढपंक्तिरथा
गारपरिष्कारहरिन्मणिः जानकीलोचनद्वंद्वचकोरानंदचंद्रमाः ५१ संसारमार्गसंचारश्रांतच्छायामहीरुहः सर्वपातकवेतालसमु
च्चाटनमांत्रिकः ५२ करुणारसकल्लोलकदंबवरुणालयः तपोधनजनाकांक्षानटाकावनतोयदः ५३ विद्याविहरणोद्यानविनयस्था
नमंडपः सौलभ्यप्राभवोत्कर्षसमावेशनिवेशनम् ५४ सौजन्यवादान्यकयोःसामानाधिकरण्यभूः सौमुख्यसुरव्यभवनंसौहा
र्दैकवितर्दिका ५५ अद्भुतोत्साहशक्तीनामसाधारणजीविका प्रसादलक्ष्म्याःप्रासादः प्रतापस्यपरागतिः ५६ प्राणप्रतिष्ठा
क्लिष्टानांप्रपन्नानांपरायणम् अनपायसमृद्धीनामवगाहनदीर्घिका ५७ जंभशासनजीवातुर्जन्मगेहजयश्रियः दुर्वारघोरदारिद्र्य
दर्वीकरखगेश्वरः ५८ तत्ताहकृतनाटकादेह ध्वांतराजीवबांधवः सुबाहुमत्तमातंगसंहारवरकेसरी ५९ भार्गवाग्रहदावाग्निप ५
टी० १ विपुलान् २ क्षीरसमुद्रः ३ दशरथः ४ अलंकरणं ५ समुद्रः ६ प्रभुत्वं ७ औदार्यं ८ इंद्रः ९ जीवनौषधं

रिवर्जननिर्झरः विराधाख्यदुर्रोतंकविद्रावणमहौषधम् ६० खरदूषणकिंपोकखंडनैकपरश्वधः दुर्गोचनीचमारीचकीचकप्रबला
नलः ६१ गृध्रराजस्यनाकादिलोकाक्रमणवर्तनी कबंधमयकासारकवलीकरणातपः ६२ शबरीचित्तकल्हारशारदज्योत्स्निको
दयः पावमानियशःकाशप्रकाशशरदागमः ६३ प्रगल्भवालिजीमूतप्रोत्सारणसमीरणः सुग्रीवराज्यसामग्रीसंपादनकान
नौकसाम् ६४ दुर्निरोधधुनीनाथजाड्यरोगचिकित्सकः दुष्टनक्तंचरस्तोमधूमकेतुविजृंभणम् ६५ कुंभकर्णमदांभोधिस्तंभ
नेकुंभसंभवः बलीयोरावणप्राणपाथोदलनाशनिः ६६ बिभीषणस्यसाम्राज्यविश्राणनसुरद्रुमः अयोध्यापुरनारीणामक्ष्णो
रत्यद्भुतोत्सवः ६७ अभिषिक्तोयथावच्चवसिष्ठाद्यैर्महर्षिभिः रमतेममतेजस्वीरामःकामसमोहृदि ६८ अत्रकिलपवित्रचरित्रैःक
श्चिद्विपश्चिदजस्रमित्थमनुसंधत्ते ध्यायाभिराममभिराममगिरामरंदधारामदभ्रमितरामममरेर्विरामम् अराममद्भुततरामलसद्गुणा
नांघोरामयघ्नममरासुरवंदिताङ्घ्रिम् ६९ दयासमुदयालयेमुदधिकाननेकानने पलाशनपलायनप्रणयिकार्मुकेधार्मिके समीरज
टी० १ रोगः २ दुर्लक्षः ३ मार्गः ४ उदकं ५ हनुमान् ६ यशोलक्षणदर्भः ७ समुद्रः ८ विध्वंसकर्तृ ९ अगस्त्यः १० दानं ११ ग्रामभार्यं १२ अधि
वमीतियुक्तमुखे १३ राक्षसाः १४ हनुमान्

सम्मीडितेऽत्रविशाम्विनमेसत्तमेबलीकृतवलीमुखेमनुजधर्मणिब्रह्मणि ७० अस्त्रामासतृणंप्रियाद्गुहितृणामासस्मरारेर्धनुर्दारामासमुनेः शिलानृपवरामासस्वयंपादुका कुल्यामासमहार्णवोपिकपयोयोधांबभूवुस्तथापौलस्त्योमशकांबभूवभगवंस्त्वमानुषीमासिथाः ७१ अशिलाप्राणदपदैरचराचरमुक्तिदैः असर्वभूताभयदैरशर्वधनुर्दनैः ७२ अब्रह्मारवीकृततृणैरतृणीकृतरावणैः अलंकान्तरदेवैस्तैरलंकापुरसाधकैः ७३ इतिविमानंदक्षिणतःप्रस्थाप्यकृशानुमुद्दिश्य शिथिलितभवखेदाश्लिष्टवैकुंठपादाकृतविपदर्पनोदाकृतचित्तप्रसादा विमलतरतरंगाविष्कृतांभोधिसंगाविहितदुरितभंगावीक्षतामत्रगंगा ७४ कू० उपेक्षणीयानिभागीरथ्यीयानिपानीयानिकिमितिवीक्षणीयानि यतः येषांजनिश्वरपानस्तुहिरण्यहर्तुर्दोर्षीकरेणगुरुदारविटेनमूर्ध्नि अह्मात्तमागभिदएवसहस्थितिश्चरव्यातोवयोजलनिधौकिलगांगवाराम् ७५ वि० शांतंपापंमंदमतेकिंमुकुंदपादारविंदनिष्यदिनींधुनीमपिनिंदसि पश्य गांगानिवारिगरुडध्वजपादपद्मादाविर्बभूवुरपुनन्पुनरिंदुमौलिम् नित्युर्विचित्रममृतंसगरान्वयेन

टी० १वानरः २अस्त्रत्वंप्राप २एवमग्रेतृणामासेत्यादिषुबोध्यं ३अहल्योद्धारासमर्थैः ४निरासः ५हिरण्याक्षःस्रुवर्णंच ६चंद्रः दुर्गुणस्वनिश्च ६
७शिवः ब्रह्महा च ८श्लेषेडलयोरैक्याद्भयमपि ९मोक्षःपीयूषंच १०राजविशेषः विषयुक्तंच

नेतोधिकंभुविपवित्रतमंसमंवा ७६ किंच सासर्वतोमुखवतीतटिनीसरांगांमूर्तिर्विधेरिवविभर्तिसरस्वतींच भेदस्त्वियान्बलिभिदश्चरणारविंदादाद्याबभूवचरमाकिलनाभिपद्मात् ७७ अपिच भागीरथींप्राप्यबुधाःपितृभ्योजलांजलीन्सादरमर्पयंति पापानिसर्वाणिततःपितृणांप्रवर्त्यहोदत्तजलांजलीनि ७८ अन्यच्च भागीरथीयःपटुधीरुपास्तेयथाक्रतुन्यायतएषधन्यः देवलमेत्यत्रिदिवेस्रुधायांभोगीरथीतिव्यपदेशमेति ७९ सरस्वत्याश्लिष्टासवितृतनयालिंगितझरास्फुरद्गुच्छस्वच्छाप्रकृतिरिवमातित्रिगुणभाक् तथाप्येषादोषापनयनपटुत्वाकलनयाप्रगल्भंसंसारंप्रशमयतिकंसारिपदभूः ८० किंच गांभीर्येणगदाधरस्यहृदयंमाधुर्यतस्तद्गिरंश्वैत्येतिप्राच्ययशःस्तदीयमनघंशैतल्यतस्तत्कृपाम् नैर्मल्यातिशयेनतस्यधिषणांनित्यंप्रसादेनतद्रूक्चानुसृतीतितत्पदभुवोवाराशिदाराइमे ८१ इतिबद्धांजलिरग्रतोवलोक्यसानंदम् काशीसकाशीभवदिंद्रगेहसौधाग्रभागाबहुसर्पिणीनागा इंधेमयूरवैरियमंधकारस्युप्तन्तिशून्याशिवशेखरेंदोः ८२ कू० वयस्यकिमेषापिस्त्वास्पदम् पश्य ये

टी० १जलंवदनबकुलंच २रक्तिमा प्रीतिश्च ३नदीवाणीच ४विष्णुः ५स्रुधायांभागीतियोजना ६रथिश्रेष्ठइतिव्यवहारंच ७माया ८सत्वादयः
९गंगा १०अश्वः ११अंधकारोपलब्धिरहिता

 मिष्टान्नंभुजोगजोत्तमहयारोहाःस्रगेहांनरेसत्काभिर्महिलाभिरत्रविहरंत्यासुक्तमुक्तास्रजः । तेघोरास्थिधराविराजदनुडुद्धाहाविषाहा 
 रिणोनर्तिष्यंत्यवशाःश्मशाननिलयान्नीचैःपिशाचैःसमम् ८३ काशीमुद्दिश्य दत्तंसाधुमुदेयदेकमपितत्क्षेत्रप्रभावाद्भवेत्कामंको
टिगुणंभवांतरइतिख्यातंत्वयित्वास्थया वासंप्राप्यमुहुर्बहूनिददतोवासांसिजन्मांतरेलोकाहतभजंतिदिग्वसनतांहेकाशितु-
भ्यंनमः ८४ वाराणसित्वयिसदैवसरोगभूमावारोग्यभूमिरितिकाममलीकवादः संतस्थुषांभवतियत्रवपुःसशूलंजन्मांतरेपिज
डभाववदुत्तमांगम् ८५ वि० अनिपुणधिषणगुणामपिकिमितिदोषीकरोषि यदेतन्नगरवासिनाभोगिनापियोगिनामुप्राप्य
शिवसारूप्यमाप्यते अत्रदेहमपवित्रमपास्यन्नच्छमृच्छतिवपुःकिलयस्य लोचनेशुचिरवामनिटालेमस्तकेहरिपदाबुंजदाले
८६ अदःपुरवासिनामन्याप्येषाधन्यता यदोषवत्ताप्यदहमदोषेनदोधकारित्यपदेशयंते प्रकाशयत्येपहितारकोघहर्णान्नु
णांवर्णनभःप्रदेशे ८७ इतिगंगातीरजनपदंकृत्स्नमवेक्ष्यसांजलिबंधम् प्रातःप्रातर्जान्हवीवारिभक्त्यागाहंगाहंकुर्मनित्यांक्रि

टी० १जन्मांतर २श्रद्धया ३गंगायुक्तायांरोगसहितायांच ४वासकर्तृणां ५आयुधंरोगश्च ६जलविशिष्टं,डलयोरैक्यात्जलंच ७सुंदरं ८अग्निः ९ 
भाल १०जटायुक्ते ११शिवः १२तारकमंत्राक्षराणिनक्षत्रप्रभाश्च

येभ्यः पुष्यैराद्यंपूरुषंपूजयद्भ्यःपूतात्मभ्योभूसुरेभ्योनमोस्तु ८८ कृ० किमेतद्देशवासिनोपिब्राह्मणाःकेवलंकलिमाहात्म्याकलित
शास्त्रीयचर्याविपर्ययास्त्वयानमस्क्रियंते पश्यतावत्प्रायेणास्यकाशीदेशीयजनस्यस्वचर्याविपर्यासम् प्रातर्हतकैतापूर्वोपिर
जकस्पृष्टान्जडोरासभैरूढान्धारयतेपटाननुदिनंधृत्वाबहिर्गच्छति गत्वाम्लेच्छमुखाशुचीन्स्पृशतिचस्पृष्ट्वापिनस्नात्यहो
नस्नातोप्यथभुंक्तएवचपलोभुक्त्वापिनव्रीडति ८९ किंच शस्त्रैर्जीवतिशास्त्रमुज्झतिपरंशूद्रात्ततेरबुभिःस्नात्वाचामतिदेव
ताःस्नपयतिस्वैरंपचत्योदनम् उच्छिष्टान्नबिभेतियातियवनैरुच्चावचैःसंगतिंमातंगान्निकटंगतानगणयन्मार्गान्मुहुर्गाहते ९०
अपिच नीचैर्दुर्यवनैःशठनीभिरपिवानिःशंकमालोकितंभुंक्तेपंक्तिविदूषकैःसहनरैरज्ञातवेदाक्षरैः मद्यास्वादनमत्तचित्त
जनतामोहायभीहाननतः कर्माण्यारभतेश्रुतिस्मृतिवचोदूराण्यसाराण्यहो ९१ अपिच कन्याकामप्युद्वहत्यप्रविजहद्दुय
यौवनामज्ञएनांद्रव्याशापाशकृष्टोप्रमतिनिचिरतरंहंतदेशांतरेषु अन्योन्याश्लेषवांछाविगलितवयसोरात्तमालिन्यमूर्त्योर्दंप
त्योर्व्याकुलेवंहतविधिरुभयोर्लोकयोःशोकयोगम् ९२ अपिच नाधीतेत्रजनोयदिकश्चिदधीतेशतेसहस्रेवा दुस्तर्केषुश्राम्य

टी० १कृतस्नानः २दुर्जनः ३चंडाल ४भ्रष्टाः ५जनसमूहः ६विवाहितांकृत्वा ७त्यजन् ८संगः

निदूरीकुरुतेश्रुतिस्मृतिकृतकर्मान् ९३ वि॰ कष्टमरेब्राह्मणनिंदांशृण्वतःकंपतेमेद्यहृदयम् यस्त्वयोपन्यस्तःसच्चर्याविपर्यासःसएष
कलेरेवदोषेणब्राह्मणानाम् कलौयुगेकोऽतर्युगंचरित्रंकुत्रनामसंभाव्यते दुरितलतिकोपघ्नात्माद्दुर्जयःखलुकलिः पश्य हर्म्य-
स्थानमधर्मकर्मविततेदुर्मानधर्मासनंशास्त्रस्तोमलवादद्दुर्लिपिचयःशांतिःसवानामपि सर्वाम्नायवचःसमापनदिनंसंस्थोसदर्चा
विधेरर्थाशाजनिभूरभूदिहमहाननर्थावहोऽयंकलिः ९४ एतादृशेकलियुगेऽपिशतेषुकश्चिज्ज्ञानादरोजगतियःश्रुतिमार्गएव यतिं
चिदाचरतिपात्रमसौकृतीनांश्लाघ्यंमितार्पमपिकिंनमरौसरस्स्वेत् ९५ किंच येकायस्थजनाश्रयेनृपकृतायेचाद्विजाःशल्मिण
स्तेयलाद्दनुसृत्यनिर्दयतयाशङ्कांस्करुष्काधिपान् देवान्भूमिसुरांश्चपांतिकृतिनस्तेचेन्मुधोदासतेब्राह्मण्यायजलांजलिःकि
लभ्रविप्राज्ञैःप्रदेयोभवेत् ९६ सर्वतोदृष्टिप्रसार्यसश्लाघम् आक्रांतास्फवस्कंधरास्कयवनैरासेतुहेमाचलंविद्राणेक्षितिभृद्ग
णेविकरुणेनिद्रातिनारायणे निर्विघ्नप्रसरेकलावपिबलात्निष्कंटकंवैदिकंपंथानंकिलतत्रतत्रपरिपालयेकोहिलोकोत्तरः ९७ पु
नश्चसश्लाघम् त्यजतुविहितमेतद्देशवारीनिषिद्धंभजतुतदपिलोकेनास्तिधन्यस्तदन्यः त्रिपुगपदनखश्रीदत्तशक्तिर्यदंगेल ८

टी॰ १कृतयुगसंबंधि २ पापवल्ल्या भयः ३ समाप्तिः ४ स्वल्पोदकं ५ उदासीनाःभवेयुः ६ नष्टे ७ ऐश्वर्यषट्कसंपन्नः

गतिदुरितभंगेलग्नकोगांगपूरः ९८ प्रौढेष्वगौडेषुचकान्यकुब्जेष्वंगेषुवंगेषुचमैथिलेषु अन्येषुसत्स्वेवबुधेषुधन्येष्वद्यापिजीवंत्स
धिभूमिविद्याः ९९ एवंतावदवधेहि एतद्देशप्रचुरचरितान्यन्यदेशस्थितानांरोचंतेचेन्ननुनमनसोमारुचन्नात्रहानिः प्राच्याःपु
त्राजनयितृवृद्धदेपवयपद्दत्स्वदंतेतहद्दिहृद्यपरमनसोतावताकोत्रदोषः १०० किंच प्रातःशीतजलेनिमज्ज्यविबुधानभ्यर्च्यपत्र
चकैरार्यःपर्युषितंतुनाभ्यवहरत्यंधःक्षुधांधोप्यसौ भागेगोमयलिप्तएवपचतेभुंक्तेततोन्यत्रयन्नीतंतद्विजहातिभुक्तिनियमो
दृष्टःक्वभूयानियान् १ इतिविमानंदूरतःप्रस्थाप्यसांजलिबंधम् भुवनकंदनक्रुध्यद्दृष्टश्रवःकुलिशायुधमचकितगिरिमापत्रा
णप्रतिष्ठितकीर्तये प्रसृमरमरुन्नाल्याचार्यप्रणर्तितवीचयेमहितजनतामान्यायास्मैमहोदधयेनमः २ कृ॰ सहासम् पामरै
रप्यपेयानांनीराणांपरिपातरि आश्चर्येजर्जरंजंतूनांमानिनंसाकथंतव ३ ममत्वेधमानपरुषघोषैरवश्वेतस्मिन्रोषएवसमुन्मिष
ति सततंक्रंदनेसर्वोदीप्यमानोदरायचे महापायसमुद्रायदरिद्रायेवकुप्यति ४ समृद्धोप्ययमतिलुब्धतयाबुल्थिमद्भिरनादृतः

टी॰ १ प्रतिघ्नः २ अधिभूमिइतिपरिच्छेदः भूमावित्यर्थः ३ नाशः ४ स्थिरः ५ प्रशस्तगतिः ६ डलयोरैक्यादर्थहृद्यम् ७ नमस्कारेच्छा ८ वर्धमान
९ क्रोशेरशब्दे १० महापायसमुद्रायेतिच्छेदः महत्या आपदःयस्येति,पक्षेएकंपदम्

पश्य रत्नाकरोपि चरमाभ्युदयालयोपि स्वर्णस्थितीरधिगतोपि बहूर्मिकोपि नोदन्वनोपचयकृत्तरणिप्रचारान्नोपैत्यहो वितरणि
त्वमसौ कदापि ५ सृष्टिरेवास्य विफलेति मे दृष्टिः तथाहि नास्त्येषाम्बुपयुक्तनानटनरोः सस्योपयोगः कुतो न स्नानाय च योग्यता
स्य पयसां कानामपानार्हता उद्गर्जन्निमियं नमन्तरुषितैर्दुर्जंतुभिर्भीषणं रत्नैः सृष्टवतो जलाशयमसुकोवाशयः कथ्यताम् ६ य
स्य स्वर्णश्रियउरूतरानित्समायांत्स्यलान्तेन स्वायत्यनुगुणतया न क्रियेत व्ययश्चेत् वह्निग्रासो भवनिविधितोमंथनं बंधनं वाल
ध्माम्प्रेप्सोर्जगदधिपतेरत्रसाक्षी सरस्वान् ७ किं बहुना कुंभजपीतोच्छिष्टशिष्टैरस्पृश्यमर्णवमवेत्य उद्गतनृष्णोप्यस्मादुदकं प्रा
योन गृह्णाति ८ वि॰ सत्त्वे सर्वगुणाकरः सरितांपतिरेष न दूषणीयः तथाहि उच्चैःश्रवः प्रदातुर्दृष्टश्रवसे पुनस्तदनुजाय वामविलो
चनदातुर्वदान्यमस्माद्वदान्यमर्णवतः ९ किंच अमृतं विबुधेभ्योदादभीष्टफलदं तरुं च धेनुं च दिवसनाय सितांशुकमीक्षि तएतान्
श्राः कवादाता १० अमुष्य खलु भाग्यवतां शेषादयोपि वक्तुमशक्ताः पश्य जन्होरपत्यं जगतः पवित्रं कलत्रमथ धेस्तनयः कलात्मा कन्या

टी॰ १ स्वर्णजलं च २ वीचिः हस्ताभरणं च ३ संचयकर्तामेघोत्पादकश्च ४ दातृत्वं नौकारहितत्वं च ५ अंतःस्थितेः ६ ब्राह्मणः ७ विष्णोः ८ अगस्त्यः ९ एतन्नामको ९
श्वः कर्णेन्द्रियं च १० इंद्रः बधिरश्च ११ विष्णुः बधिरबंधुश्च १२ लक्ष्मी सुंदरनेत्रं च १३ दातारं १४ चंद्रः वस्त्रं च

तु धन्या कमला बिभर्ति जामातृभावं जगदीश एव ११ अन्यच्चेदमस्य भागधेयम् यत्तीरे पुरुषोत्तमस्थलमिदं यत्क्षारसरः किंनरश्रेष्ठैर्नि
त्यमधिष्ठितं भगवतः सांनिध्यमुख्यास्पदम् अत्रत्यन्नवनामसूनुकरगता मुक्तिस्तदास्तामहो देहोदाहविनाकृतोप्यविकृतः काष्ठादि
वत्तिष्ठति १२ किंच निवेदितस्यात्र रमासखाय नीचात्मतस्यापि किलोदनस्य भक्ताशनं हंत भवार्जितानां महांहसां नाशनमामनं
ति १३ सभक्त्युन्मेषम् दारुणि सन्निहिताय प्राज्ञैर्हुतमश्नते मखेषु हविः शिशिराय नित्यरुचये शश्वच्ययेरचययेमङ्गुतायनतीः १४
इति नमस्कृत्य स कदूरमन्यतो विमानं प्रस्थाप्य सश्लाघं सत्वेस एषः सर्वसंपदामास्पदतया त्रिदशालयस्य देश इव गुर्जरदेशश्चक्षुषी
स्वीकरोति अत्रहि सकर्पूरस्वादुक्रमुकनवर्वीटीरसलसन्मुखाः सर्वश्लाघापदविविधदिव्यांबरधराः लसद्गल्लाकेल्यासुमघुमि
तदेहाश्च घुसृणैर्युवानो मोदंते युवतिभिरमीतुल्यरतिभिः १५ अत्र वधूनामन्यादृशं सौंदर्यम् तप्तस्वर्णसवर्णमंगकमिदं ताम्बोस्
दुस्वाधरः पाणी प्रातनवप्रवालसरणी वाणी सुधाधोरणी वक्त्रं वारिजमित्रसुसलदलश्रीसूचने लोचने केवा गुर्जरसुभ्रुवामवयवा
यूनां नमोहावहाः १६ कृ॰ सत्यमेवं तथापि नैते सारवस्तूपभोगचतुराः तथाहि व्रीडामारव्यतिकरवतीर्विदग्धदाभाः कृशांगी-

टी॰ १ जगन्नाथस्थानं २ पवित्राय अग्नये च ३ भूषणानि ४ मृदुल

क्रीडायोग्येप्यहहसमयेगेहमेवत्यजंतः नित्यासक्तानिरुपममणिश्रेणिवाणिज्यलाभेवंभ्रम्यंतेबहुदिनपरिप्राप्यदेशांतरेषु १७ ८॰
वि॰ मंदमनीषसएवपुरुषाणांगुणविशेषएवनतुदोषः देशेदेशेकिमपिकुतुकादद्भुतंलोकमानाःसंपाद्यैवंद्रविणमतुलंसद्मभूयो
प्यवाप्य संयुज्यंतेसुचिरविरहोत्कंठिताभिःसखीभिःसौख्यंधन्याःकिमपिदधतेसर्वसंपत्समृद्धाः १८ अनेवंभावीहिपुरुषाध
मत्वमावेदयति तथाहि आकिंचन्यादतिपरिचयाज्जाययोपेक्ष्यमाणोप्यूपालंभानामननुसरणाद्धिष्यदेवारिवलेभ्यः गेहेतिष्ठन्कुम
तिरलसःकूपकूर्मैःसधर्माकिंजानीतेभुवनचरितंकिंस्वकंचोपभुंक्ते १९ किंच व्यापारांतरमुत्सृज्यवीक्षमाणोवधूमुखम् योग्र
हेष्वेवनिद्रातिदरिद्रातिसदुर्मतिः २० इदंचावधीयताम् इच्छेद्यस्स्वस्यनिवस्तुंभवनोगच्छेत्सराज्ञःसभांकल्याणीगिरमेवसंसदि
वदेत्कार्यविदध्यात्कृती अक्लेशान्धनमर्जयेदधिपतेरावर्जयेद्वल्लभान्कुर्वीतोपकृतिंजनस्यजनयेत्कस्यापिनापक्रियाम् २१ अ
न्यच्चेदमवधार्यताम् अयुक्तंयुक्तंवायदभिहितमज्ञेनविभुनास्तुयादेतन्नित्यंजडमपिगुरुतस्यविनुयात् विवक्तैनैस्पृत्यंकथ
मपिसभायामभिनयेत्स्वकार्यसंतुष्टेक्षितिभृन्निरहस्येवकथयेत् २२ इत्यलंप्रसक्तानुप्रसक्तयेनिदूरतोविमानमानयन्सा १०
टी॰ १पश्यतः २वर्द्धयात् ३यासंकर्तुं

जलिबंधम् कृष्णाश्लेषविशेषिनासितरुचेकालिंदितुभ्यंनमःकुंजेभ्यःश्रितनतावकांबुकणिकापुंजेभ्यएषोंजलिः गोपीभ्यःपरिरिप्सया
मुररिपोस्तेषुस्थितान्योनतीर्नाथायाभिरुपासितायचनमोवाकानधीयीमहि २३ कृ॰ कृतंसखेचोरजारशिरोमणेःकृष्णस्यजगद
तिसंधातुरनुसंधानेन तथाहि लुंठित्वानवनीतमन्यसदनेलोलेक्षणोभक्षयन्गोपीभिःपरिगृह्यमातृसविधंनीतोमुकुंदस्तया लुंठ
मानवनीतमित्यभिहितोप्येतद्विलुंठाद्विकिमित्युक्तोमानवनीतमेवत्वनमित्योगोजनन्यांन्यधात् २४ किंच अंसेसलीलमधिरोप्यमु
कंस्वहस्ताद्रोप्याभयाकुलदृशःकुतुकीमुकुंदः अंसंगतंशकमिहापनयेतिवाचंतस्यानिशम्यसतदंशकमाचकर्ष १२५ अपिच
नीत्वाराधिकयानिशांमुररिपुःप्रातर्गृहानागतस्त्वंमाभूरपराधिकःपुनरितिप्रोक्तोपिपूर्वंमया कस्मादेवमभूरितिश्रितरुषानिर्भर्त्सि
तोलीलयात्वद्यचैवसराधिकोहमितितांव्यामोहयन्मायया २६ वयस्यमेवंवादीः सहिपरमपावनःसकलजगदंहःसंहरणकृतेक
तावतारोवंदारुजनानंदनोयदुनंदनोनिंदापददवीयान् असत्क्षयार्थाभ्युदयस्ययस्यजगुश्चरित्रंजगतःपवित्रम् पुनःपरस्मैपुरुषा
यतस्मैसमस्तनम्यायनमस्तनोमि २७ अस्यखल्वत्यद्भुतंचरितमाकर्ण्यताम् चोरस्यचौर्यंजगतिप्रतीतंचौर्यस्यचौर्यंनतुदृष्टपू
टी॰ १आलिंगनेच्छा २नमस्कारोक्तिः ३ अपराधं ४ अमित्यक्षरेणयुक्तंस्कंधसंबंधिनंच ५ अपराधीराधाविशुक्तश्च ६दूरः

र्वेषू चौर्याद्यकार्याणि बत कृतानि कुरुष्वास्यसुष्वंतितमांनमांसि २८ किंच चित्रंचित्रंजृंभिते कृष्णमेघे कंसं प्राप्ताप्रापकोपं समृद्धिः द०
आसीद्यत्कुंहोनिदाघप्रशांतिर्हंसौहिंसामानसेकीर्तिरुत्या २९ पुनः सप्रभक्त्युन्मेषं भगवंतमुद्दिश्य कंसंध्वंसयतेमुरंनिरयते हंस
तथाहिंसते बाणंक्षीणयते बकंलघयते पौंड्रं परंलुंपते भौमंक्षामयते बलाहूलभिदोदर्पपराकुर्वते क्लिष्टशिष्टगणप्रणम्रमवते कृष्णा
यतुभ्यंनमः ३० इति सुदूरं विमानमानयन् वनजनपदसरिद्गिरिप्रभृतीनवेक्ष्य सविस्मयमीश्वरमुद्दिश्य कत्योषधीः कतितरू
न् कतिचामहीध्रान्कत्यंबुधीन्कतिनदीः कतिपुंस एतान् कत्यंगनास्त्वमसृजः कतिनाथदेशान् मन्येतवैषमहिमानहिमातिकुंठो
३१ इत्यन्यतोगच्छन्पुरोवलोक्य सबहुमानम् महाराष्ट्राभिरख्यामधुरजलसांद्रोनिरुपमप्रकाशोदेशोयंस्मरपुरनिकाशोविजयते गृह
स्थायत्राभीगुणजलधयः केपिविभवैः समृद्धाः श्रद्धातोमुहुरतिथिपूजाविदधते ३२ कृ० सखेप्राक्कालीनचरित्रमधुनाकथयासि अ
धुनाकिलकलिमालिन्यादन्यादृशीरीतिरेतद्देशवासिनामासीत् तथाहि अपारैर्व्यापारैरहरिहनयंतोशनदशास्वयस्नाताः संध्यां
विदधतिनजातुस्वसमये त्यजंतः स्वांवृत्तिं द्विजकुलभवांग्रामगणकीभवंतोहंतामीकथमपिचजीवंति बहवः ३३ उपनयनविवा ११
टी० १उदिते २स्वमातुलपक्षेप्रासोदकीच ३हेतिखेदे अव्ययं पक्षे हानिदोयो अघासुरः ४ बकासुरः हंसपक्षीच ५ यशः पंकश्च

हावुत्सवैकप्रधानौकलिविभवतएषांकालभेदानभिज्ञाः विजहतिनकदाचिद्वेदपाठेकयोग्यैवयसिचयवनानांवाचनाभ्यासमेते ३४
अज्ञानामविरामलौकिकवचोभाजाममीषांपुनर्मंत्रोच्चारणएवपर्यवसितंमौनव्रतंकर्मसु ग्रामायव्ययलेखनेननयतांकालानशो
पानहोपारंपर्यतईदृशाभिहनृणांब्राह्मण्यमन्यादृशम् ३५ अन्यच्च कुक्षेः पूर्त्यैयवनविनतेर्भृत्यकृत्यानिकर्तुंविक्रीणीतेवपुरपिनि
जंवेतनैरेतदास्ताम् विप्रोभूत्वाप्यहहगणनानैपुणोवंचयित्वास्वर्णस्तेयंरचयतिजनः स्वामिनांपोषकाणाम् ३६ अहोवतक
लिमहिम्नासदसद्विवेकवैधुर्यमखिलजनानाम् येमुष्णांतिनिशिप्रविश्यभवनंयेवाबलात्काननंनैतेस्वामिधनंहरंतिननुता
न्निंदंतिचोराइति सद्योहंनहरतिपोषकधनंसख्याविपर्यस्ययेकष्टंतानपिवंचकानिहपुरस्कुर्वंतिसर्वेजनाः ३७ अयंखल्वनुप
मोदेशइतित्वदुक्तंयुक्तमेवयत्रस्वल्पेनापियत्नेनसिद्ध्यंतिमहतीप्रतिष्ठा वेदव्यासः सइहदशयोवेदवेदाक्षराणिश्लोकंत्वेकंपरि
पठतियः सस्वयंजीवएव आपस्तंबस्सइहकलयेत्सम्यगौपासनंयः कष्टंशिष्टस्तितिकृतिकलौकाश्यपमृच्छतिविद्याः ३८ वि०
किमरेभूसुरेष्वेवदोषमुद्घोषयसि अत्रापिसंतिबहवः कल्पिताग्निहोत्राः शास्त्रार्थबोधकुशलाः किलशांतिमंतः अंतर्मुखाः सत
टी० १वाचस्पतिः २आप्नुवंति

नमात्मविदोमहांतोनिर्धूतबाह्यविषयानिगमाध्वनिष्ठाः ३९ अन्यच्च शुचीभूताःस्नानैःश्रुतहितपुराणाश्चनियमात्प्रतानांस्पर्शान द०
वहितत्ददोमीविजहतः स्वराभ्यर्चांकृत्वाशुचिरूतमदंत्यन्नमनघंमहाराष्ट्रेदेशेविलसतिमहानेषहिगुणः ४० किंच चमूनियम
नेनवाजनपदाधिकारेणवाहिजव्रजउपव्रजनप्रभुपदंमहाराष्ट्रजः नरपतिमिहपालयेद्यदिधरास्वराणांतृतोभवेद्यवनवेष्टितंसुन
नमेतदब्राह्मणम् ४१ यच्चदोषांतरंभवतापरिभाषितंतद्दशेषमपिसाधुजनोपकारेणपरिहीयते अलंमेस्वसंहतुमेहःसहस्रंसुए
कोपिविप्रप्रवेकोपकारः कठोरःकुठारःकिलैकोपितिग्मोविनिर्भेत्तुमीष्टेविषद्रूननेकान् ४२ कृ० अस्त्वेवमप्यत्रत्यानामाधिेन
स्ववर्णप्रभवानामपिपुनरतिदुःसहचेष्टितम् पश्य देशेदेशेलुंपटाःपर्यटंतोभंजंभंजं ब्राह्मणादीनशेषान् हारंहारंहृतसर्वस्व
मेषापापाएतेस्वोदरंपूरयंति ४३ वि० सत्यमेवमथापिमहनीयमेवतेषामेवंचेष्टितम् तथाहि मायाचंचुनयाभयावहगति
प्रत्यर्थिपृथ्वीभुजांमाहाराष्ट्रभटच्छटारणपटुर्नोपर्यटाद्येनचेत् देवब्राह्मणवर्गनिग्रहकृतोदेशांस्तुरुष्काइमेनिष्प्रत्यूहमनोर
थावितनुयुर्निर्द्विभूमीस्वरान् ४४ ततश्च देवक्षोणीस्वरहितकृतेदारितम्लेच्छपंक्तेर्मत्यांसत्यांकथमपिमहाराष्ट्रभूस्यचे १२
टी० १ ग्रतिति २ श्रेष्ठः ३ तीक्ष्णः ४ ब्राह्मणेतर ५ भुक्त्वा ६ हत्वा ७ स्तुत्यं ८ मोहजनकत्वनैपुण्यं ९ निर्विघ्न १० मर्षणीया

श व्याधिव्यूहप्रतिकृतिकृतंव्यक्तमुग्रौषधानांकायारोग्यप्रणयिहृदयैःक्वाटेवंमर्षणीयम् ४५ इत्यन्यतोविमानंगमयन्नग्रतोविले
क्य कश्येबहवःसमेवेतामानुषामार्गानप्यपर्शन्त्यर्यंति निपुणंनिरूप्य सम्स्राधम् अंगान्वंगान्कलिंगानथमगधकुरून्कोसला
न्केकयान्वाकाश्मीरान्कुंतलान्वायवनजनपदान्किंचपांचालदेशान् नेपालान्केरलान्वाकतिचनकतिनःपांड्यतुंडीरचोलान्
कर्नाटानगौडलाटान्परगतिघटनालंपटाःपर्यटंति ४६ कृ० अरेकिमेनान्निंदनीयानभिनंदसि नानाजातिभवाइमेकलिबला
देकीभवंतोनराः वैराग्याभिनयंचिराहृदधतोवर्णाश्रमत्यागिनः निर्धूतानघवैदिकप्रणयनानिष्किंचनावंचनादक्षादिक्षुविदि
क्षुकुक्षिभृतयेभिक्षाटनंकुर्वते ४७ किंचविमलचरितविश्वामित्रादयःपरमर्षयोबहुभिरतुलैर्ब्राह्मण्यंयत्तपोभिरुपार्जय
न् तदिहजहतोजन्मग्रामंचर्यांविसुरवेघर्मोप्यहहकतिचित्पारवंडेषुप्रविश्यहताजनाः ४८ वि० कथमरेहरेर्भक्तेष्वपीषुसन्नंत्य
सि दोषेभ्योनैवभेतव्यंहदाचेन्द्धक्तिरच्युते तिमिरेभ्योहिनभयंदीपश्चेज्ज्वलतिमहान् ४९ किंच दुःस्वप्नंजन्मदुरितंचदहामवि
द्यांहाहंतहंतिपरमाहरिभक्तिरेका एकोपिराघवशरःकिलसप्रतालभोगान्रसानलमपित्वरयाबिभेद ५० अपिच धुनोतिनिबि
टी० १ प्रतीकारः २ कटुत्वं ३ संभीभूताः ४ संकुलान्कुर्वंति ५ परलोकसंपादनसक्ताः ६ वेदमार्गपरायणाः ७ निंदितुंबद्धपरिकरोभवसि ८ दूरीकरोति

इंतुमः परिलुनाति पापाटवींतनौनित्यमनोरथानुपचिनोति नानोत्सवान् अर्नक्ति च पुनःपुनर्नंतुमनःकथानिर्झरैर्येनैक्तिपरिपक्तिमं
दूषंगिरीशभक्तिः शुभम् ५१ किंबहुना पूतागानापुण्यगंगादिसिंधुस्नानान्नानाक्षेत्रयात्रापराणाम् दारागारापत्यवैराग्य
भाजांसाधुभिर्ज्ञैरादरः कार्यएषाम् ५२ इतिविमानमन्यतःसमानयन्निपुणंविभाव्य कृशोभनक्रमकरेसैविनोजीवनार्थिभिः
मध्यस्थवांडवोराजत्यांप्रदेशोनदीशवत् ५३ कृ॰ अयेकिंप्रशंसस्यपयातमर्यादमसुंदेशम् पश्य ग्रामेग्रामेनिवसतिन्निरालस्
भिमावेनशूद्रोभृत्योभूत्वापठतिगणनांब्राह्मणस्तस्यपार्श्वे वेदाध्यायीसरइवमरौकापिकश्चिद्यदिस्यादत्रामुत्रमकरकरणेवर्तते
सौनियुक्तः ५४ किंच महाराष्ट्रेदृष्टादोषा अप्यत्रातिदेष्टव्याः विश्वावसुः वयस्यमेवंवादीः मानामयक्षतमरवैरनघैरिहा
मीमाचाधिगीषतवचांसिचिरंतनानि देवेषुभक्तिरवनित्रिदशेषुचैषांविश्राणनंचविविधान्विधुनोतिदोषान् पश्यतावदेतेषांभा
ग्यवत्ताम् रोमावल्यातपनसुतयारम्यहाराद्युनद्याल्हद्यास्कंगस्तनगिरिजुषोनाभिवापीमनोज्ञाः भूमेर्मूर्तीरिवचसुमतीमुंजनेभा
टी॰ १छिनत्ति २विस्तारयति ३पुष्णाति ४सिंचति ५प्रकाशयति ६परिपक्कं ७विष्णुः ८सुशोभाः पक्षेसुशोभनाः इतिच्छेदः नक्राःक्रमाश्चेतियथासंख्ये १२
नबोध्यं ९उदकं प्राणधारणंच १० ब्राह्मणः अग्निश्च

ग्यवंतः क्षोणीपालाइवसुजनाः कामयांभ्रीपुरंध्रीः ५६ शृणुतावत् कोवाकल्पतरोर्गुणःसुमनसांयःस्वाश्रितानामहोसारांशान्हरतःप्र
सत्यमधुपान्धत्तेमहामोदतः कर्णेत्वर्जुनकीर्तिहानिपरताकालांबुदेगर्जनंनीरंध्रंपुनरांध्रदेशनृपतिष्वास्तेसमंस्पर्शनम् ५७ समंता
दवलोक्य अहोकृष्णागोदावरीमध्यमध्यासीनानाममीषांवैदिकानामभिनंदनीयोयमनपायःसंप्रदायः निगमपाठनिराकृतदु-
ष्कृतानयविदोबहवोत्रधरासुराः प्रतिवसंतमुपात्तसुखासुखंप्रतिवसंतिमुकुंदपरायणाः ५८ अत्रत्यानामधिकारव्यापारनिरता
नामप्ययंरवल्वकलंकोनियमः आ श्रयितव्योनरपतिरार्जयितव्यानिभूरिवित्तानि आरब्धव्यंवितरणमानेतव्यंयशोदशापिदिशः
५९ कृ॰ समंतादवलोक्य हंतसंततमत्यंतदुरितनिरतायवनाःचातुर्यतःपर्यटंति पश्यसर्वे भवनार्वतीनपवनाश्वशोभिनो
भवनागेशायिभवनाघमर्दिनः सवनादिधर्मलवनायदीक्षितायवनाःश्वरंतिभुवनातिभीषणाः ६० विश्वावसुः सत्यमेवमथा-
प्येतेषुतुरुष्कपूवनेष्वनन्यसाधारणविक्रमगुणमसुगृहाण सुद्वायमभिलंतुहंतपटवोयोधाःसहस्राधिकायद्येकोपिबलात्तुरुष्क
यवनेष्वारूढयोटोभटः निस्त्रिंशंपरिकंपयन्स्वकटकान्निष्क्रामतिक्रोधतःसर्वेतेकृपणाःस्तृणान्यशरणाःखादंतिसीदंति-
टी॰ १निर्दोषं २दानं ३वसंनेवसंते ४वाप्यधिकत्वपल्याश्चाः ५विष्णुभक्तिपीडकाः ६ध्वंसः ७नियुक्ताः ८विशेष ९अश्वः १० खड्ग

च ६१ किंच पिबंतुमदिरामपीपरितुदंतुदेशानद्रोहरंतुपरस्कंदरीरपलपंतुवेदानपि तथापिचमृधांगणेतृणवदेवमुक्तासवोहृ 
टाद्विदधतेमरुत्पुरकवाटिकोद्घाटनम् ६२ इतिव्योमयानमन्यतःस्यंदयन् अग्रतोदृक्पासप्रत्यभिज्ञ कर्णाटदेशोयःपूर्वंकर्णंदे
शमभूषयत् सएषसांप्रतंपश्यचक्षुषोभूषणायते ६३ लोचनासेचनकंनामास्यदेशस्यरामणीयकम् प्रतिनगरमिहारामाःप्र
त्यारामंपचेलिमाःक्रमुकाःप्रसवाःप्रतिक्रमुकंप्रतिप्रसवमप्युत्सर्पतिमधुततिः प्रतिमधुबिंदुमिलिंदाःप्रेंखंतिप्रतिमिलिंदमारावाः
प्रत्यारावस्फुटशाम्यदाउदाराःप्रतिमदंमदनः ६५ कृ० हंतकथमभिनंदसिनिंदनीयममुंदेशम् तथाहि वेदवैदिकविद्वेषदूषिताभ्य
स्मरूषिताः चंडोलसंत्यत्रपाखंडालिंगालिंगिनवक्षसः ६६ आकर्णयतावदन्यदप्यमीषामपचरितम् शिरःपुरारेर्द्विजराजपाद
दिव्यामृतैःसिक्तमितीर्ष्ययेव शूद्राइमेलिंगधराःस्वयंतत्स्वपादतोयैःस्नपयंतिकष्टम् ६७ वि० सखेमैवंसंगदिष्ठाःयदस्मिन्दे
शेयदुशैलप्रभृतीनिदिव्यक्षेत्राणिदृश्यंते दुरितमवनतानांदुर्निरोधंनिरुंधन्सितमतिभिरतंद्रैःसेव्यमानोमुनींद्रैः यदु
गिरिरयमिंधेयत्रनारायणात्माविलसतिकिलहर्षंनीलमेघःप्रवर्षन् ६८ सभक्त्युन्मेषम् यदुगिरिनटागारास्थाराजमौलिप १४

टी० १युद्धांगणे २अतिस्पृहणीयं ३ परिपक्वाः ४ भ्रमंति ५ लिप्ताः ६ अत्यंतकोपनाः ७ शुद्धबुद्धयः ८ प्रकाशते ९ नारायणस्वरूपः

रिस्फुरन्मणिगमहोधारानीराजितांघ्रिसरोरुहा नवजलधराकारानारायणाह्वयभूषितानिरुपधिदयासारासाराजतेपरदेवता
६९ पुनःसविस्मयम् यःप्रभुर्यादवक्ष्माभृत्पुरस्कृत्यापुराबभौ अधुनायादवक्ष्माभृदधःकृत्यासभात्यहो १७० सश्ला-
घम् भूभृत्यस्मिन्पक्षिराजेनपूर्वंश्वेतद्वीपाद्दाहृतांश्वेतमृत्स्नाम् धन्यानित्यंधारयंतोललाटेमालीमस्यंमानसंनिर्मृजंति ७१
किंच विष्णुपद्याकलनयाविश्रुतोविमलाशयैः कासारोऽत्रहरत्येनःकविःकंसारिभागिव ७२ इतिविमानमितरत्र
परिस्पंदयन्सानंदम् रजतपीठपुरंननुकांचनश्रियमिदंवहतेमहदद्भुतम् इहवसन्शठमर्षीतिवहोबुधः परमयोग
तएवविराजते ७३ पुनःसश्लाघम् अच्छैर्द्विजेंद्रैरमृताभिलाषादासेवितोभुव्यभिजातकीर्तिः आनंदतीर्थाह्वयमभ्र-
कश्चिदन्वर्थयन्नाविरभून्मुनींद्रः ७४ कृ० अस्तुतावदेवमथाप्यदसीयदर्शनानुवर्तिनामधुनातनानांद्विजानामपिबद्ध-
वआकर्ण्यतामपचाराः सततमकृतसंध्योपास्तिरभ्यस्तशास्त्रः सवितरिगतबाल्येकाल्यसंध्यामुपास्ते तदपिभु-

टी० १यदुराजपुरस्करणेन २ एतन्नामकपर्वतः ३ क्षालयंति ४जान्हवीपक्षेविष्णोःपदानि ५ मानसंअंतरस्य ६ कांचन इतिशब्दश्लेषः ७ पित्तलंवर्त-
नंच ८ लोहंभोगसहितंच ९ प्रातःसंध्या

विश्वगु० विनमात्यंमन्यतेधन्यमन्यंत्यजतिविहितहानात्साध्वसंमाध्वसंगः ७५ किंच गायत्रीसहसाजहद्भगवतीयंयज्ञोपवीतंत्यजन्मुंचन्किंचशिखां- ८०
१५ विरक्तइवयः संप्राप्ततुर्याश्रमः आरूढश्चतुरंतयानमभयोहाहंतदेशांतरेष्वर्थानामुपसंग्रहायविचरत्येषोप्यमीषांगुरुः ७६ अहोमहानेष
व्यामोहोविदुषामपिकलिमाहात्म्यात् पश्य यस्यक्वापिविलोकनेसवसनंस्नानंबुधैः स्मर्यतेयस्यान्नग्रहणेचनिष्कृतितयाचांद्रायणं-
चोदितम् तस्यप्रत्कतवाहनस्थितयतेर्दृष्टिर्विमुक्तिप्रदातस्यान्नंचसमस्तपापत्दिति प्रत्येतिविद्वानपि ७७ पश्यतावत्कलिकाल
नरपालस्यगृहस्थेषुप्रद्वेषंभिक्षुषुपक्षपातंच भिक्षांकष्टमटंतिकुक्षिभृतयेपादौगेतैः क्लेशयंत्याछन्नाःशिथिलैः पटैश्चगृहिणो
जीर्णेगृहेशेरते राजत्सूक्ष्मपटाः प्रशस्तशिबिकारूढागृहिभ्योन्नदाग्रावव्यूहदृढेमठेस्थितिजुषोधन्याहिसन्यासिनः ७८
अन्यच्च अनभ्यस्यवेदानहो शास्त्रवादान्पठंतः स्फुटंतेबर्तेतन्मतस्थाः अधीशाननादृत्यतद्भृत्यपूजा-
पराणांनराणांपदंतेभजंते ७९ किंच एकादश्यांकालयोर्होमहानादेषामग्निर्लौकिकत्वंयदागात् तस्मादे-
षांव्यर्थहिंसानिवृत्त्यैस्यादुत्कृष्टःपिष्टपश्वादरोपि ८० वि० किमरंकेशवभक्तिप्रकर्षदीप्रानपिविप्रान्दूषयसि १५
टी० १ निश्चिनोति २ गमनैः ३ विष्वादीन् ४ सायंप्रातःसंबंधिः ५ होमाभावात् ६ दीप्तान्

शुद्धाहिकिलमध्वसिध्धांतनिष्ठानामियंहृदयंजरीहर्षीतिरीतिः आबालेस्थविरंस्थिरंहरिदिनेशुद्धोपवासव्रतंनिष्ठेत्यूहमहर्निशंवि
जयतेनारायणाराधनम् श्लाघ्याभागवतेषुभक्तिरमिताश्रद्धाचयेषांदृढाशास्त्रेस्वीयगुरूदितेनचरितंसाध्वेषुमाध्वेषुकिम् ८१
एतद्गुरूणांयतीनांपुनःयेषामाकलितदोषवैधूर्याशुभचर्या दनुजभिदभिषेकैःसत्पुराणावलोकैःपुनरपहतमोहैःपुण्यतीर्थावगाहैः भव
कदनविदूरैर्ब्रह्मविद्याविचारैः क्षणमिवशुभचर्याःकालमेतेनयंति ८२ यदपित्वयातदुपरिदूषणमुपन्यस्तंतदपिमदपिहितत्हृदये-
भ्योभवादृशेभ्यएवरोचतेनतुगुणग्राहिभ्यः नचदेशनिवासिशिष्यनिवहत्राणायगुर्वाज्ञयासंचाराक्षमएषविंदतियतिश्चेद्वाहनं-
काक्षतिः दत्तवित्तमशेषमास्तिकजनैर्दैत्यारिनित्यार्चनासात्कृत्यस्वयमस्पृशन्वसतिचेन्निंदास्तिकिंतावता ८३ किंच
स्वामिनिविनियुक्तानांसत्वेनानध्यवस्यतायतिना कृत्यंयत्स्यन्नत्वंप्रत्यवयंस्यत्रतद्भुजस्तुकुतः ८४ एतेनमतांतरस्थाअपि
मठाधिपतयोयतयोव्याख्याताः इदंचावधेयम् यदिकतिपयेजातालस्याद्यथासमयंद्विजाबतनतनुयुःसंध्योपास्तिंभविष्यति-
किंततः निगमचरितानंगीकारोहिदूषणमंगिनामशकनवशाद्दोषायेषांनजात्वनजुष्टितिः ८५ किंच पंथानमनुरुं-
टी० १ पुनःपुनर्हरति २ आबालवृद्धं ३ निर्विघ्नम्

विश्वगु. धानः पित्रादेर्नैव दुष्यति इति स्मृतिमधीयानैरेषां दोषो हि दुर्वचः ८६ इति विमानं दूरतः समानयन्पुरतो दृष्ट्वा भाषावेषाचा ८०
रैर्भूषाभिः पूरुषाश्च योषाश्च वीक्षस्व प्रतिदेशं विलक्षणा एव हंत लक्ष्यंते ८७ कृ० सखे वीक्षस्वेति मा वोचः किंतु सत्वरम-
१६ तिक्राम कीशकल्यजनानिमान्जनपदान् चंद्रालोकत्वयांधकारभरयोश्चांपेयकिंपाकयो राजत्कुंडलिराजराजिलकयो राजीव
धत्तूरयोः खेलत्कोकिललोककाककुलयोः क्षीरार्णवांध्वोरिव व्यक्तं पंडितमूर्खयोः समदृशो भ्रांत्या इहत्या इमे ८८ ॐ० मित्यग्रे
विमानमुपानयन् सानंदं सांजलिबंधं च स्फुरभितमतमालस्तोमपुण्यद्रसालप्रकरतिलकसालप्रेंखत्सुखद्रुजालः श्रितसमव
नशीलः श्रीशलीलानुकूलः शिथिलितभवमूलः सेव्यतां शेषशैलः ८९ पुनः सहर्षम् पन्नगेषु च नगेषु खगेषु द्वीपिराजस्फुप
यत्स्फुरद्वत्स्फ वल्लरीषु च दरीषु झरीषु प्रार्थयंति जैनिमत्र मुनींद्राः ९० विविधनिगमसारे विश्वरक्षैकधीरे वृषशिखरिविहारे वक्ष
स्याश्लिष्टदारे भगवति यदुवीरे भक्तबुद्धेरदूरे भवतु चिरमुदारे भावना निर्विकारे ९१ अहो महोन्नता खल्वस्य शैलस्य धन्यता य-
तः वैकुंठेपि निरुत्कंठमकुंठविभवं महः तदत्र चित्रचारित्र्यं रमते रमया समम् ९२ इति सानंदं ध्यायति कृ० १६
टी० १ वानरः २ चंपकः ३ पांगारा इति प्रसिद्धः ४ शोणः ५ डुंडुभाख्यः क्षुद्रसर्पः ६ कूपः ७ उत्पत्तिं ८ अंतःकरणं

हंत व्यपेतविषयांतरव्यासंगत्वदंतरंगं देव एवास्मिन्नच्युभवनिदृढसंगम् वि० सखे सत्यमेवोदितं भवता दधती चिरायस्म
दनीमुरस्थले तदलीनसीमदद्नी स्फुरवंसतताम् रसिकस्य चित्तमिह कस्य देवताप्रतिपन्नपन्नगनगानगाहते ९३ कृ० किमरे
केवलमर्थपरमसुंदेवमनुसंधत्से इष्टप्राप्तिमनिष्टभंगमपि वा संप्रार्थ्य भक्त्या जनैर्यद्दातव्यमिति प्रतिश्रुतमभूद्द्रव्यं तदा प्रेफ
ले तेदास्यंति न चेत्स्वयं भयमसावुत्साद्य तेषां पुनः कल्लांसार्थहिरण्यत्त्द्दत्सद इदं गृण्हाति रत्स्यासमम् ९४ किंच नातेत्यामंत्र्य
कश्चिद्दूनसुवितृषितस्तोयबिंदून्य याचे कस्याप्युच्चैरत्तटाकं खनत इह गिरौ हंत भृङ्गारभूरू दत्तं केनापि सूनावलिमधिमुकुटं मृ
न्मयीमेवदभ्रेसोयं भूयः श्रुतिज्ञैर्भुवनपतिरिति स्तूयते ध्यायते च ९५ वि० किमरे करुणानिधये व्यंकटाचलपतयेप्यसूयसि
शृणु तावत् नियंतां जंतूनां निखिलजगदुत्पादविभवप्रतिक्षेपैः क्रीडन्परमपुरुषः पन्नगनगे परत्वे सौलभ्यप्रकटनकृते वेंक
टपतिः कृपासिंधुः कांकान्ननु मनुजलीलांन तनुते ९६ किंच किमप्युपादाय दिशन्नभीष्टं कृतंजनेभ्यः प्रतिरंजनाद्यः कृ
ष्णावतारीयकुचैलसंपत्प्रदानरीतिं विवरीवरीति ९७ प्रियसहचरी लक्ष्मीस्थानं सहस्रवंसकः स्वयं कुवलयपतिश्शालोरत्ना
टी० १ मानसं २ अतिशयितं ३ प्रतिज्ञातं ४ स्वर्णहिरण्याक्षश्च ५ व्याज इति लोकप्रसिद्धं ६ सृष्टिस्थितिसंहारैः ७ परलोकविषये ८ सदामा ९ प्रकटयति अंगी
करोति वा १० किरणाः प्रणयश्च ११ पृथ्वीकमलं च

करः श्वशुरो हरेः तदपि हरति द्रव्यं पूर्णो जगत्यनिरेषयत्तदिह भजनां कर्तुं नृणामुदभमनुग्रहम् १८ अखिलहेयप्रत्यनीकानंतकल्याण द०
गुणैकतानस्य विश्वनाथस्य श्रीनिवासाभिधानस्य परस्य ब्रह्मणो गुणार्णवामृतकणानां गणनायामनिपुणाधिषणाधिषणादयोपि
गांभीर्यैकावलंबे गरिम्णि निवसतो कांतिकुल्यातटाके कल्याणाम्भोजकल्पे निरवधिकरुणासारकल्लोलराशौ चातुर्यौदार्यलक्ष्मीविहर
णशरणे सद्गुणौघाद्दधने देवे श्रीवेंकटेशे न जिगणयिषता केन वाग्ग्लानवाचा १९ किंच समग्रोऽहिहरे वैदे समग्राहि गुणावलिः प्र
त्यक्षेपि परत्वेस्य प्रत्यक्षेपि च संशयः २२०० अहो महोन्नतस्याप्यस्य सौलभ्यं कनककुसुमस्य सौरभ्यमिव रसिकेभ्य एव स्वदते प
श्य प्रचंडविश्वकंटकप्रखंडनैकपंडितः पतंगमंडले वसन्नयमेष पाडवप्रियः अकुंठरीतिकः प्रसन्नपुंडरीकलोचनः सकुंडलीन्द्रभूध
रप्रकांडमंडनायते १ अवलोकयतावद्दुरगवरधरणीधरशिरोमणेश्चक्रपाणेरतितरस्फकरवरवितरणकौशलमतिपेशलम् मूकाः
ऽपं कमपि बधिराः श्लोकमाकर्णयंति श्रद्धालुस्तं विधिरवतिकुणिः श्लाघया वीक्षितेंधः अभ्यारोहत्यहह सहसा पंगुरप्यद्रिशृंग
सांद्रालस्याः शिशुभरणतो मंदमंदं तु वंध्याः २ सर्वतः पर्वतमालोक्य सश्लाघम् सर्वोत्तुंगश्रितशुभगुहः साध्वभिख्यातशैलो १७
टी० १ बृहस्पतिः २ क्रीडागृहे ३ सम्यक्गृहीता ४ त्याजितः ५ सूर्यः ६ कुअः ७ दरीरामसरस्त्र

भास्वद्वंशोपचयजनकः सानुजः स्फूर्तिकोयम् एवं नूनं क्षितिभृतममुं जानतीजानकीशं काशश्रेणीकलयशरणीकुर्वतीवर्वरीति ३ पुनः
सानंदम् प्रकाशवद्धपोद्दवत्यपि फणिक्ष्माभृत्यदःप्रकाममवलोकयते परममन्यदत्यद्भुतम् निजोरसि पयोधरं चिरमचंचलांवि
द्युतं पयोधरस्सुरस्य सावपि बिभर्ति नित्यं निजे ३ इति दक्षिणतो विमानं समानयन्सानंदम् विलोकय सरवे विपिनानाममीषां परमंर
मणीयकम् पुरः पुरो घनं वनं वने वने महागिरिर्महागिरौ महागिरौ विराजते गुहागृहम् गुहागृहे गुहागृहे विहारतत्परो हरिर्हरौ हरौ
निरंकुशः कृतेभसाध्वसो ध्वनिः ४ कृ० किमरे वर्णयस्यत्वाक्षकथ्याणि मनुष्यांगकवलनचपलचंडपुंडरीकाननानि काननानि इत
स्तावद्भावन्यनिकरइतः संत्यजगराइतो लुंटाकानां समुदयइतः कंटकचयः इतो व्याघ्राउग्राज्वलनजनकावेणवइतो वनं संलक्ष्यैत
न्मन इदमहो मोहमयते ५ वि० सखे निपुणनिरूपणनएतेषां गुणानपि गृहाण अनायासग्राह्याण्यवनिपतिभोग्यान्यपि फलान्य
यत्नेन प्राप्यान्नृपसदृगपेक्ष्याः सुमनसः अ सूर्यंपश्यान्यप्यहह सफलभान्यश्मभवनान्यरण्यानि भाजामनिपतृनि भाग्यं किल
गिरः ६ अपिच गहनगुहाविहारि हरिपाणिरुहाभिहतद्विरदशिरस्तटोद्गलितमौक्तिकसंहतिभिः अहह विभूषितैरिह चिरं विह
टी० १ कुलंवेणुश्च २ शृंगबंधवश्च ३ प्रत्यंतपर्वताः चरणाश्च ४ शेषान्वले ५ विघसभालक्ष्मी ६ विपदपि ७ संचयः ८ तस्कराः

रंतिस्फुरंतंसममबलाजनैरतिविलासपराःशबराः ७ इतिव्योमयानंदक्षिणतःप्रापयन्पुरतोनिर्दिश्य कंठोपरिकंठीरववक्त्रविदंष्ट्रा
रुचिविचित्रचंद्रिकया स्फटिकाचलइवनयने घटिकाचलएषसंप्रतिधिनोति ८ सभक्तिप्रकर्षमंजलिंबध्वा वरकेतुस्थतार्क्ष्या
यस्मरकेलिपुषेश्रियः नरकेक्षणविघ्नायनरकेसरिणेनमः ९ स्थिरशंखारिचिन्हायसुरसंघार्चितांघ्रये परसंहारदक्षायनर
सिंहायमंगलम् १० जंभदंभहरक्षेमारंभलंभनमूर्तये शंभुसंभावनीयायस्तंभडिंभायमंगलम् ११ कृ० किमरेक्रोधमये
पिनरमृगेंद्रस्तववन्चनंविरचयसि प्रल्हादमाल्हादयितुंतमेकंसर्वस्यकुर्वन्भुवनस्यभीतिम् सैंहंदधेसंहननंपुरायस्तवस्तवस्तत्र
कथंप्रवृत्तः १२ वि० वयस्यमैवंवादीः यतः अपुण्यधौरेयहिरण्यदूनत्रिलोकशोकक्षपणायशौरिः कायाधवायासनिरास—
दंभस्तंभादिहोज्जृंभतसंभ्रमेण १३ इदंचावधार्यताम् मनुष्यतिर्यक्षुपेत्यनित्योदिवःस्वयंस्थावरतोभ्युदंचन् विचित्रशा
स्त्रान्वयमंत्रवेदैःप्रत्याय्यमानंप्रकटीकरोति १४ पुनःसविस्रंभम् घटिकाचलवपुरवेक्ष्यतत्वतोघटिकाचलंसमधिरुह्यभक्ति
तः नरकेसरीद्वचरणौविलोकयन्नरकेसरिण्यतिनजानुमानवः १५ इतिविमानमन्यतःसंचारयन्सहर्षम् वीक्षारण्यमिदंवदं
टी० १नरकावलोकनं २शत्रु ३इंद्र ४नृसिंहः ५सिंहस्य ६शरीर ७धुरीणः ८नाशाय ९कयाधोरपत्यंप्रल्हादः



तिसरसीत्सन्तापनाशिन्यसावस्यारोधसिवीरराघवइतिप्रख्यातनामाहरिः व्यक्तंराजतिवीतिहोत्रइववयोविस्तीर्णहेतिद्युतिः क्षेत्रंप्राप्त
कुशस्थलंप्रभजतिश्रीशालिहोत्रांचितम् १६ आकलयतुभवानत्रैवंचमत्कारम् द्विरेफवर्णास्फुमनोरमांननुबिभर्तिसंज्ञामिववीररा
घवः स्फुपेर्वराजेनयदीयमर्चितंसुरवंपदद्वंद्वमिवोपशोभते १७ कृ० वयस्यकिंसन्नद्धासिवीरराघवस्तवने यदस्मिन्नपिपन्नगनग-
नाथइवपरधनग्रहणपरत्वादयःप्रादुर्ष्यंतिदोषाः वि० अत्रास्मदुक्तेनैवतत्समाधानेनपुनरत्रापिसंतोष्टव्यमायुष्मता पामरमतेरमते
नकस्यमनोवीरराघवेदेवे स्वेक्षासाध्यजगज्जनिःस्फुतनुपद्माक्षांकितोरस्थलःसाक्षादेषपरःपुमान्स्फुतन्नुनिर्दाक्षायणीशादिभिः वीक्षार
ण्यपतिर्विराजतिगतिर्दाक्षासद्रकुसाहिनीधीक्षांत्यायुररोगताधनयशोगोक्षाद्यपेक्षावताम् १८ किंच उपेत्यवीक्षावनमुन्नतःसदास्फु
वर्णवल्यास्फुमनःपुषाश्रितः अहीनसेव्योहरिचंदनस्तनोत्फपाश्रितानामुचितांस्फुवासनाम् १९ इत्यन्यतोविमानंप्रेरयन्नग्रतोवी-
क्ष्य समन्तभिज्ञम् एषाभूतपुरीनिरीक्षितचरीदोषापहंत्रीमयाप्यर्थीमानत्रगुणाब्धिरात्रिरभवद्रामानुजार्योमुनिः त्रय्यंतामृतसिंधुमं
थनभवद्ध्यैयंगवीनात्मकंविज्ञानंयदुपज्ञमेवविदुषामद्यापिविद्योतते २० किंच कामादिवैरिगणभीमानवद्यनिजनामाभिलाषग
टी० १खड्गःज्वालाच २भ्रमराःरेफद्वयंच ३इंद्रःचंद्रश्च ४प्रादुर्भवंति ५साहित्यं ६नन्दाम्यापत्या ७अनमाः सर्पाश्च ८अवलोकिता ९सआचार्यएवआद्यज्ञानकारणंयस्य

रिमानैमानिकार्यसमभूमामतौवचनसीमानिलंघिमहिम्ना श्रीमाननूनकलसोमाननोविमलधामावमानितरविः क्षेमाणिजृंभयतुभूमावसुत्र द॰
चसरामानुजोयतिपतिः २१ अपिच सजयतिरामानुजयतिरजेयतिपरवादिनंयदीयोक्तिः संजेयतिबोधमनघरंजयतिबुधान्ध्ययाश्चभज
यति २२ तेमीमांसाशास्त्रप्रमथनपरिकलितबुधजनानंदाः लक्ष्मणमुनेःप्रबंधालक्ष्मणपूर्वजशराइवजयंति २३ अत्रकश्चिदपश्चिमोवि
पश्चितामित्थमेनमनुदिनंप्रणमति रामानुजायगुरवेनरवेषभाजेशेषायधूतकलयेकलयेप्रणामान् योमादृशानपिकृशान्परिपातुकामो
भूमाववातरदुदंचितबोधभूमा २४ एतच्चाकर्ण्यताम् रामानुजोयामुनतीर्थसेवापराङ्मुदीतोनरकंनिरोद्धुम् तयोःपुराणःप्रणिनायगीतांत
स्यानवीनस्त्वतनानटीकाम् २५ क्व॰ सत्यमेवं तथापितत्पथानुविधायिनांमेधाविनामपिपरावमंतृत्वादयोदोषाःप्रसिद्धाः तथाहि श्रीरा
मानुजदर्शनैकरसिकःशिष्टःप्रकृष्टैर्गुणैःपूर्णानांविदुषांमतांतरजुषांपंक्तौनभुंक्तेक्वचित् हाहंतौदनमंततःशकृचितमंतदृष्ट्वाशकृत्त्यजत्या
स्तांतत्त्वमनेस्थितैरपिसमंमायेणनाभ्यात्यसौ २६ तेषांन्याय्यइहद्विजान्वयजुषांभाषाप्रबंधेश्रमोवेदेविश्वसृमर्थसाधनविधौबद्धादरेजा
ग्रति नीरंक्षीरपयोनिधेरुपगतोदैत्यारिदीत्याहृतकोवाधावतिदुग्धलब्धिचपलोगोपालकस्यालयम् २७ किंच एतन्मतानुवर्तिनांकेषां १९
टी॰ १अजवत्करोति २ खंजसंगेत्यस्यरूपंसंबभातीत्यर्थः ३रायपक्षेते प्रीतिच्छेदः मांसाशाः राक्षसाः,मीमांसाशास्त्रं ४ देवपंडितो ५ निरयाकृती

चिदेषांचेष्टनेशवैदिकानाम् पश्य मुंचंतःपंचयज्ञानद्रविडभणितिभिर्मोहयंतोनभिज्ञान्निंदंतोहंतयज्ञानसकृदपिहरेर्वेदनंवारयंतः लुंपंतः
श्राद्धचर्यायनिमपिगृहिणोवंदनंकारयंतःसंद्वेषंधारयंतःकतिचिदविहितैरेवकालंक्षिपंति २८ किंच घंटाघोषंत्यजंतोहरिपरिचरणेसर्वलोका
वगीतंख्यातंत्रैलोक्यमातुःश्रुतिभिरभिहितंवैभवंखंडयंतः संकेतःश्रद्धयैवस्वचरणसलिलंस्वीयगोष्ठ्यांपिबंतःकेचिद्विप्लावयंतेजगदभिदध
तःकेशवंदोषभोग्यम् २९ अपिच यज्ञाःपंचमहत्पदेनसहितायेचापरेविश्रुतायत्कर्मग्रहसंक्रमादिसमयेसर्वैर्बुधाःकुर्वते तत्सर्वंविसृजंतिका
म्यमितियेत्र्यंतविध्वंसकास्तेर्द्दनित्यतयाश्रितेयदशनंयाचव्यवायक्रिया ३० अन्यच्च विदुषामपिमोहमावहंतोवितथैतित्यसहस्रवर्णनेन
विनयाभिनयात्खलाःकिलामीविजयंतेकपटालयाजगंति ३१ किंच यस्यांनास्तिपुरस्कृतिर्नयविदांयज्वातुहासास्पदंपूज्यंतेचनिरक्षराः
पुनरमीसांकेतिकाचार्यकाः वेदानामवहेलनंव्यतिहतावर्णाश्रमप्रक्रियागोष्ठ्यैदुष्कलिपुष्कलीकृतपुषेकस्यैचिदस्यैनमः ३२ किंबहुना
प्रायोयेषांसकृदकरणेप्रत्यवायोस्तिभूयान्यज्ञादींस्तानिहविजहतिस्पष्टवेदोपदिष्टान् कर्मैवामीविदधतिजडाःकिंतुसंकेतसिद्धंकष्टंकष्टंब
तहतकलेःकश्चिदुन्मेषएषः ३३ नगाहंतेगंगामपिनटजटासारइतियेनमज्जंत्यंभोधौलवणरसवेशंतकइति नपंचेवंगव्यान्यपिपशकृ
टी॰ १संनवेषं सतांद्वेषंच २ संसदि ३ पंचमहायज्ञाः ४ सूर्यचंद्रोपरागौ ५ दृष्टिविकासः ६शिवः ७ संचयः

शक्तसारइतिहाविबंत्येषांदोषान्कइहनिपुणःस्याद्गणयितुम् ३४ वि० किमरेकलंकक्लेशरहितेष्वश्रीमद्रामानुजदर्श नेषुगरिष्ठेष्वपिस ८०
न्त्यसि अथवाभवादृशानांकुशविवेकानांकानाममर्यादा उक्तंहि अनल्पकंधरायांहिसर्वज्ञस्यापिदारुणाः आरोपयंतियालिन्यंका
कोलाइवनेखलाः ३५ इतिपश्यतावदेतेषांपवित्रतमंचरित्रम् उच्छिष्टान्यतिदूरतःपरिहरंत्युज्झंत्यसत्संगतिंप्राणापत्स्वपिबांधवेतरगृ
हेप्राश्नंतिनापोष्यमी काम्यंनिर्मिमतेनकर्मभगवत्कैंकर्यएवस्थिताः सत्वस्थैःस्पृहणीयएषजयतिश्रीवैष्णवानांक्रमः ३६ किंच
भालेशुभ्रमृदूर्ध्वपुंड्रतिलकःपद्माक्षमालागलेदिव्यंशंखरथांगचिन्हमनिशंदीप्तंभुजामूलयोः वक्त्रेशौरिगुणैकवर्णनपरावाच्यस्तदे
नोमुषामेतेषांहरिभक्तितुंदिलहृदांवीक्षापिमोक्षावहा ३७ दोषारोपणंचैतेषुत्वदीयमुपहास्यम् तथाहि इष्टात्सबांधवजनादितरैरदृ
ष्टयन्दुंजनेन्नमिहलक्ष्मणपक्षनिष्ठाः दोषःकिमेषदुरितापहरोगुणोवेत्येवंविविच्यपरिपृच्छगुणागुणज्ञान् ३८ किंच दृष्टबंध्वित
रैःसनामनर्दतांदोषोयएषोपरैःशिष्टैःस्पृष्टमनश्नतामिहमहाराष्ट्रादिकानांसमः एषांदूषयितानकोपिनियताहारःपरंतुद्विजःसर्वाशीनतुदू
षणंहितभुजांनेषामिदंभूषणम् ३९ यश्चशठारिप्रभृतिसत्वस्थमुनिनिर्मितदिव्यप्रबंधाध्ययनेदोषउद्घाटितःसोयमितिहासपुराणा २०
टी० १ महांतं पक्षेअनल्पकंधरायामितिच्छेदः कंधरायांग्रीवायां २ शिवःबहुश्रुतश्च ३ पृथक्पृथक्विचार्य ४ अशनमकुर्वताम्

दिभिर्वेदमुपबृंहयद्भिःसद्भिर्नरोचते शृणुतावत् बकुलविभूषणेनगुरुणाकरुणानिधिनाश्रुतिमुकुंदाभिसंधिमवधार्यपरंगहनम् रचित
मिहप्रबंधमनुसंदधतांकथितंसममपिदूषणंस्मृतिपुराणमधीलवताम् ४० किंच उपादेयंप्राज्ञैरुचितविषयंद्राविडवचोप्ययुक्तार्थंहेयं
भवतिवचनंसंस्कृतमपि हरिविभ्रंश्चेतस्यनतिस्फुरंगोपिस्कृतिपदंनसद्दूषोप्यंतःकरणधृतनारीस्तनभरः ४१ वस्तुतस्त्वगस्त्यव्याकर
णानुशिष्टानामनवद्यशिष्टपरिग्रहविशेषप्रकृष्टानांद्राविडशब्दानांकोनामसंस्कृतादपकर्षः पश्य सयासांव्याकर्ताचुलकितसमुद्रोमु
निवरःप्रबंधारःप्रौढाःशठमथनमुख्याःशमधनाः प्रवक्तारःशुद्धाःप्रथितयशसःपूर्वगुरवोगिरांपारेतासांजयतिगरिमाद्राविडगिराम्
४२ यश्चैकदेशविषयदूषणोपन्यासस्तत्राप्याकर्ण्यताम् कतिचिदलसाःकर्मायासासहायदिनिश्चलास्तदपिभगवद्भक्तिस्तेषांधुनो
तिभवव्यथाम् श्रमसहजनेकोहेतुर्नृणांविनैवहिलंघनैर्ज्वरनिरसनायालंवीर्योचरंपरमौषधम् ४३ किंच रहस्यव्याख्यानेरघुवरचरि-
त्रानुकथनेस्वर्यासध्रीचीनांबकुलधरवाचांप्रवचनैः अमीभाष्यव्याख्यानैर्हरिचरणकैंकर्यविधिभिःप्रणामैश्चार्याणांक्षणमिवनयंत्यत्रदि
वसान् ४४ पुनःसक्षणमनुध्यायन्सम्बाधम् अन्यदास्तांनामतामेवकाममन्योन्यकलहायमानानांनानाविधानांश्रुतीनामविरोध-
टी० १ उपनिषत्तात्पर्यंनिश्चित्य २ धारयन्मुकुंदः ३ साधारणकंदरोपि ४ लावण्ययुक्तः ५ अगस्त्यः द्राविडभाषोपर्यगस्त्यमुनिप्रणीतंव्याकरणमस्ति ६ ग्रंथकर्तारः ७ कर्मायाससहना
समर्थाः ८ स्थिरचेतसः ९ अनशनक्लेशसहनसमर्थैकयोग्यैः १० वेदानुसारिणीनां

साधनेनसाधुभावंप्रकटयंतींअखिलगुणाभिरामांरामानुजसरस्वतीमभिनंदामि प्रसिद्धंहिसंधिमिच्छंतिसाधवइति पश्य नित्यंहेयंगुणावधू-
ननपरानैर्गुण्यवादाश्रुतौमुख्यार्थाःसगुणोक्तयःशमगुणप्रख्यापनाद्ब्रह्मणः अद्वैतश्रुतयोविशिष्टविषयानिःशेषरूपाश्रयाभेदोक्तिस्त-
दिहाखिलप्रकृतिहितंरामानुजीयंमतम् ४५ कृशानुः अवितथमेतदथापियइमेसंचरंत्याचार्यपुरुषसमाख्याताएतन्मताभिनि-
विष्टाःशिष्यास्तेषामेषारीतिर्नरोचतेविवेचकेभ्यः पश्यतावत् हत्वामार्गेद्विजादीनखिलमपिधनंहृतंहत्वातिदृप्तोदुर्वृत्तास्तस्करा-
येवनगिरिनिलयायेचनीचाइहान्ये कृत्वांचक्रांकमेषांझटितिविदधतःकिंचमंत्रोपदेशंनहत्तेरेवविनैर्दधतितनुममीवंशपारंपरीभिः
४६ किंच जारान्चोरान्किरातान्जनपदद्मनान्राजपार्श्वान्महाशाःशिष्यान्कृत्वातिदृप्ताःश्रुतिपथविधुराःश्रोत्रियैर्ब्र-
ह्मनिष्ठैः साकंनोभुंजतेमीसकृदपिविनतिंकुर्वतेग्रेनतेषांसंकेतेनैवसिद्धंनदिदमविदुषांश्लाघ्यमाचार्यपुंस्त्वम् ४७ अहोम-
हानयमभिजनविद्यावृत्तसंपन्नानामन्येषामप्यनिवृत्तोव्यामोहः आचारेषुदवीयसांधनतृषामज्ञातवेदाध्वनांकामातंककलंक-
पंकिलहृदांकेषांचिदेषाममी शूद्राचारजुषोजितेंद्रियतयाश्रेष्ठास्स्वयंसूरयः शिष्यत्वंयदुशंतितत्किलकलेःसाम्राज्यमत्रोर्जितम् 

टी॰ १अनित्यत्वादनुपादेयाः २मत्ता ३चक्रमुद्राचिन्हं ४दुर्नृपान् ५रहिताः ६दूराणां ७अतिलोभिनां ८इच्छंतिस्वीकुर्वंतिवा

४८ अपिच स्वयंतरितुमक्षमःकिमितिरानसोतारयेदितिस्वयमचिंतयन्नगणयन्धनानांव्ययम् जडंगुरुरितिभ्रमनुश्रयति-
पुस्तकाडंबरैर्बहूपकरणान्वितैःपृथुफलदेवताविग्रहैः ४९ अपिच अमलमतिषुलोकेजागरूकेषुनेकेष्वपिनिजगुरुवंशोत्पत्तिमेवा-
वलोक्य विगतशमचरित्रंवेदशास्त्रानभिज्ञंकमपिगुरुरितीमेकष्टमाराधयंति ५० अपरमपिकलेराकर्णयचमत्कारम् सम्यक्
शिष्यजनंपरीक्ष्यबहुभिःसंवत्सरैरुत्कटशुश्रूषाभिरुपादिशन्प्रमुदिताःपूर्वेकवीतिश्रुतम् आराध्येष्टसमर्पणैरविनतानाचार्य-
एवादरादर्थैर्भूरिनमैःप्रसह्यलभतेशिष्याननुक्रमेणाधुना ५० वि॰ मंदमनीषमहतःपुरुषानेवंमादुदूषः भवजलनिधिमज्ज-
त्सज्जनोज्जीवनार्थंजगतिमहतिवंशेजातवंतोमहांतः प्रपदनधनतुष्टाःपंचसंस्कारदानात्कतिनकतिनएतेज्ञानहीनान्पुनंति॥
५२ किंच आचार्याःपुरुषामहत्तरकुलेष्वब्धोस्तदास्योज्ज्वलानावःसंसृतिवारिधेःपरममीनावोंतरिष्यन्यदि अप्राप्ताच्युतदास्य-
वृत्तयइहाविज्ञातमंत्रोत्तमाःसर्वेतर्हिकलौवतप्ततनवोहंतापतिष्यन्नधः ५३ तापादिभिःसपापांजनतांपुनतामहात्मनामेषाम् दोष-
श्चेदेषसमाढुष्टान्पुनतोपिगांगपूरस्य ५४ इदंचबोद्धव्यम् सद्वंशप्रभवश्चरित्ररहितोप्याहत्यएवोत्तमैः साध्वाचारयुतोपिदुष्कुलभ-

टी॰ १महतीभिर्देवताप्रतिमाभिः २विष्णुः ३नअवातरिष्यन्नितिच्छेदः नतरेयुरित्यर्थः ४तप्तमुद्रादग्धदेहाः

वः सभ्येषुनाभ्यर्हितः शालिग्राममकृत्रिमंपद्मुमतिःसल्लक्षणाद्युक्तमप्यादत्तेनतुलक्षणाद्यमपितंचक्रोज्वलंकृत्रिमम् ५५ सविनयंज मं
लिंबध्वा शिष्यार्पितेनशफचिनाद्द्रविणेनतुष्टाःशिष्टामुकुंदशरणा यतिधर्मनिष्ठाः सत्संप्रदायनियताःप्रयताःसदायेतेभ्योनमांसि-
करवैवरवैष्णवेभ्यः ५६ इतिविमानमन्यतःप्रस्थापयन्अग्रतोदृष्ट्वा एषाकैरविणीविशल्यकरणीदोषाशकृगार्त्तात्मनामेतद्वोधसि-
पार्थसारथिरितिरव्यातःसमिंधेहरिः यत्पादांबुजचुंबिनांकरपतेःकौटीरगारुत्मतःस्तोमानांतुलसीदलप्रकरतोनोवेदभेदंजनः ५७
अत्रवसंतःसंतश्चिरंतेनोत्त्यंतचिंतनाश्रांताः आतेन्वंतंकृचरितमातन्वंतोविभांतिधनाः ५८ कृशानुः अस्तुतथापि परि
कलितगुणमहाणहूणप्रायेहेयजननिबिडनगरविशेषसन्निकर्षएवात्रमहान्दोषः दुर्लभाःखलुहूणेभ्यःकुत्सिततमालोकेहूणाःक
रुणाहीनास्तृणवद्ब्राह्मणगणंनगणयंति तेषांदोषाःपारेवाचांयेनाचरंतिशौचमपि ५९ पुनःसनिर्वेदंविधिमुद्दिश्य शौचत्या
गिषुहूणकादिषुधनंशिष्टेषुचक्लिष्टतांदुर्मेधस्सुधराधिपत्यमतुलंदक्षेषुभिक्षाटनम् लावण्यंललनासुदुष्कुलभवास्वग्र्यासुनीरूपतां
कष्टंसृष्टवतात्वयाहतविधेकिन्नामलब्धंफलम् ६० विश्वावसुः पश्यत्वमेतेष्वपिगुणग्राहिताम् प्रसह्यनहरंत्यमीपरधनौघम- २२

टी॰ १एतन्नाम्नीनदी २मुकुटनीलमणेः ३उपनिषद्भागाः ४निरंतरासक्ताः ५शरीरत्यागपर्यंतं ६विस्तारयंत ७कुलीनासु

न्यायतोवदंतिनमृषावचोविरचयंतिवस्त्वद्भुतम् यथाविधिकृतागसांविदधतिस्वयंदंडनंगुणानवगुणाकरेष्वपिग्रहाणहूणेष्वमून्
६१ इतिविमानमितःप्रतीच्यांदिशियोजनपंचकमतिक्रामयन्पुरतोदृष्ट्वासामोदम् इयंकांचीकांचीकरिशिखरिणःकापिनगरीगरी
यस्यांयुस्यांविहरणजुषांपक्ष्मलदृशाम् मुखंदृष्ट्वादर्शंरजनिकरमादर्शममलंस्वरूपंकेपंकेरुहमपिननिंदंतिरसिकाः ६२ किंच
सुमनोजनानास्थानंस्थानेसद्रूपशोभनीसेयम् स्फुरताभ्युदयविधात्रीशंभुकांचीसाधुरंजयतिचेतः ६३ नगरीमेनांदक्षिणेनकरुणा
झरीवभगवतीवेगवतीनामप्रवहतिपावनीशैवलिनी माधुर्याध्ययनोपसन्नमधुनिष्यंदानिमंदानिलव्यालोलत्तटचारुभूरुहशिखानि
ष्पातिपुष्पाधिकैः डिंडीरैःस्मितवंतिपांनिदुरिताहंगापगायास्फुरद्वेगोद्वेजितवाजिमेधमखकृद्ध्यांसिपांथासिनः ६४ इतश्चस-
खेचक्षुर्निक्षिप्यताम् यएषराजत्कटकःसदालिभिःसमाश्रितःशोभनदानसंपदा सनित्यशुद्धंवरदंतमुद्वहन्यथार्थनामागज-
भूभृदीक्ष्यते ६५ सभक्तिप्रकर्षमंजलिंबध्वा द्विपाचलसुपाश्रितंत्रिदशपादपस्वर्गवीत्रपाकरमुपास्महेदिगधिपावनंपाव
नम् कृपाशिशिरलोचनंकृतभवव्यथामोचनंवपासुरभिलाधरंवरदनामधामास्थिरं ६६ कृशानुमामंत्र्य वरदंभोभजसत

टी॰ १कांचयंत्रादि २सुंदरीणां ३दृष्ट्वा ४कामासक्ताःदेवसंघश्च ५देवत्तरं तिश्च ६स्त्रेनंभूषणंच ७एतन्नामकनद्याः ८अनेकाश्वमेधफलनिर्माणेविधातृसदृशानि
९कल्पद्रुःकामधेनुश्च १०वरदंभोइतिपदं

तंशरदंभोरुहविलोचनंदेवम् परदंभोपहतिकरंहरेदंभोलिधरमुखंमखाशनुतम् ६७ पुनःसानुस्मरणरोमांचम् तापत्रयप्रशमना
दमृतं गृहीतुंतामेववैधहयमेधवपामुपासे अंभोधिजाधरसुधारसवासितेनयाचुंबितावरदराजमुखांबुजेन ६८ पुनःसानंदम्
भुवनवहनशीलासिंधुरागंभजंतीजयतिवरदमूर्तिःसाधुवेगापगाच दमथितुमवतीर्णाधातृयज्ञंहितीयासफलयितुमिहाद्यासादरा
प्रादुरासीत् ६९ क्र० वयस्यतवेयंजयानभिज्ञेनस्मिन्जयतीत्युक्तिरयुक्ता सवनसफलीकरणभणितिरपितस्यानिकूल्यभाजिनो-
चिता तथाहि अजयैज्ञोद्भवेतस्मिन्कथंनामजयज्ञता सवनौशानुकूलेकासवसाफल्यकारिता ७० वि० सखेश्लेषभंग्येवदोषमु
द्भावयताभवतानस्मिन्नखिलहेयप्रत्यनीकेनैवाविष्कृता युक्तंचैतत् पद्मोल्लासविधायिनिसत्पथंदीप्तिकृतिचक्रभव्यकरे भास्वति
वरदेभवितानजातुदोषानुषंगवार्त्तापि ७१ समंतादवलोकयन्नंजलिंबध्वा सेवेनंतसराःश्रयेकरिगिरिंश्रीपुण्यकोट्यासमंध्याया-
म्युत्तरवंदिमत्रमहितंदेवाधिराजंभजे कल्याणींकलयामिकंजनिलयांकल्याणकोटिस्थितामीडेराघवयादवादिमकिटीन्वंदेमुकुंदश्रि

टी०१शिवेंद्रादि२उदकंजगच्च३समुद्रगमनंरक्तवर्णंच४विधातृयज्ञोत्पन्नापक्षेजयानभिज्ञजन्मा५सवनभागाशनंतन्नाशश्च६लक्ष्मीकमलंच७आकाशेवेदमार्गो 
८चक्रवाकहिताःपक्षेचक्रयुक्तकरे९सूर्य दीप्तिमांश्च१०रात्रिर्दूषणंच

तान् ७२ इतिप्रतीच्यांदिशिकिंचिदंतरमतिक्रम्यसविस्मयानंदम् अत्रहिस्वावज्ञानसमुन्मिषद्रुषिसरस्वत्यांविरंच्यध्वरप्रत्यूहाय
नदीप्रवाहविधिनापर्यापतंत्यामहो दूनेतुद्रुहिणेगणेचमरुतांदीनेमखंविघ्नतःपातुंसेतुरूदेषसेतुरभवत्पक्षींद्रकेतुःस्वयम् ७३
किंच परंवेगःसरस्वत्याउद्वेगमपितत्पतेः एषसेतुर्विधरणोन्यरुणद्धगपध्वभुः ७४ अपिच आशामीशानबंधोश्चरणनखरुचांधा
रयास्मेरयंतीकुंभीडिंभस्यकाष्ठामपिमणिमुगुटन्युप्तमुक्तामयूखैः पर्यंकेशब्दविद्यापरिमलसरलेपंकजस्पर्धिनेत्राव्यक्तिर्वेगापगायां
स्वपितिसमुदिताकापितापिच्छवर्णा ७५ सप्रत्यभिज्ञम् प्राजापत्यमखांतरायतटिनीपाथोनिरोधोद्यतःप्राप्तःपावनहेमतामे-
रसिनीपारंरूपारम्यधीः क्षेमंकोमेलमल्लिकासहचरःपुष्णातुकृष्णांबुदच्छायःसोयमवातःरन्महत्तियोरंगेभुजंगेशयः ७६ पुनर-
नुध्यायन्सानंदम् शतमखमणिस्तोमश्यामंशयनमहीश्वरेशशिसखमुखंराजीवाक्षंसमुन्नतनासिकम् महितचरणंधातुःपत्न्या
महस्तमसःपरंहृदिलगतुमेबिंबोष्ठंनद्यैथोक्तकृदाह्वयम् ७७ किंच वेगवतीसेतुतयाप्रागवतीर्णादिदेवतावितुतान् द्रागवतीयं-
दुरिताद्रागवतीकलशजलधिकन्यायाम् ७८ क्र० अहोकथमाशुकविःसपन्नपिभवानमुंदेवमभिनंदसि तथाहि अधःकरोत्या

टी०१शेषे२सरसी३तद्भार्या४श्रीरंगक्षेत्रे५यथोक्तकारीतितद्देशप्रसिद्धंनाम

दिमशाद्विक्रोरगंकलानिधिंधिकूकुरुतेमुखेनयः कृतांनरायस्यसरस्वतीजवेस्लवेरुच्चिरस्त्रस्यकथंभवेत्कवेः ७९ वि॰ किमेभिःश्ले
षैकावलंबनैर्दोषैरसुंदेवमाश्रितेषुखल्वप्रत्यूहः स्वरस्वतीप्रवाहोविजयते पश्य कल्पंतेकामेरामास्फुरदधरसुधागर्वसर्वस्वमोषोद्य
क्तान्युक्तान्यमीषांरसिकजनमुदेधातृयोषाहिएषां श्लाघावेलासुदोलायितनिजमुकुटाकल्पकल्पद्रुसूनोड्डीनालिध्वानतानाकलन
परिमिलच्चारुवीणाभिगाना ८० किंचिदुत्तरतोदृष्टिमाधायसांजलिबंधम् क्षेमारंभनिदानमौपूर्वजुषांहेमाभिरामांबुजस्तोमायत
मरंदलंभितपयोभूमास्वभूमानिता सह्याद्रिप्रभवासमानविभवामह्यामसह्यानिर्हृत्पुण्यायोगिवरेण्यपुण्यसरसिद्रुह्यादसह्यांहसे
८१ इतिदक्षिणतःसादरमक्षिनिक्षिप्यसांजलिर्भूत्वा विश्वाल्हादकरींकरींद्रसरसीकल्हारपारंपरीभव्यामोदधुरंधरानिलजडदि
व्यालयोजाग्रतीम् कष्टापद्विनिवर्त्तिनींघनतपःक्लिष्टालसनांयोगिनामिष्टामष्टभुजांभजामिविबुधैराराधितांदेवताम् ८२ अथप्रती
च्यांदिशिकिंचिदंतरंगत्वाविमानभागमध्यसहर्षम् त्रिदशाकलितस्नेहस्फूर्तिमान्शमयंस्तमः भातिदीपप्रकाशोत्रशरणागतबोधकृत
८३ कृ॰ दीपप्रकाशसंज्ञादेवस्मिन्नुत्तमस्फुरणे रात्रिंचरप्रतिकूलनदीपजातोल्लसद्रुचोनाहौ ८४ वि॰ मदमेत्तमेवंप्राणीःप्रकटि-

टी॰ १रतिः २अलंकारभूतानि ३स्नानं ४देवाः वर्त्तयश्च ५तैलंप्रीतिश्च ६तिमिरमज्ञानंच ७देवतादीपप्रकाशश्च ८गृहंरक्षणंच



तदशावतारेप्रत्नुराज्याकलनभावितस्फुरणे दीपप्रकाशनामक्षमंविभावर्युदितभीतिहरे ८५ निरूप्यसानंदं श्रीरंगे
श्वरशासनादधिगतंश्रुत्यंतचल्लाच्चार्यकंदांतंयंकविवादिदंतिहरिरित्यार्यांवदंतिक्षितौ सर्वस्यामपिहंततत्रसरणौस्वा
तंत्र्यमासेदुषास्तत्रामासहिवेंकटेशाकविराडत्राविरासीत्प्रभुः ८६ जनानुद्दिश्य भेदाभिदाविषयवादापतद्गुरुपपादार्थ
साधकमदौत्सादावहाद्भुतमरवादागापगास्पदविनोदापहाभणितिः पादारविंदनतखेदापहारचतुरोद्दामारमाधवगुणा
स्वादाभितुष्टइहमोदायवोभवतुवेदांतदेशिकमणिः ८७ अपिच नानाम्नायपरिश्रमंकलयतांनास्त्येवशास्त्रेषुधीः स
त्यारप्युभयोस्तयोर्नसकलभासाहित्यक्षितौसाहि ती अप्येतासुसतीषुनास्तिविनयोनाचारभक्तिक्षमाचातुर्यःसचसाचसाचसचता
श्चालंब्यखेलत्यमुं ८८ किंबहुना अर्वतैमास्येतमुपास्यदेवंगर्वनमोजंकुदृशांप्रशांतं कुर्वंतमेतंगुरुमंतरेणशुर्वेतरंको
त्रगुणीवृणीते ८९ कृशानुः वयस्यमास्मैवमवोचःयदेतत्पक्षावलंबननः पक्षांतरस्वीकारएववरमितिमेप्रतिभाति तथाहि
यस्मिन्पक्षेस्तिमोक्षोगुरुणिलघुनिवासाधनेप्यप्रयुक्तेश्लाघाहेतुश्रमार्थव्ययकरयजनाद्यव्ययकर्मप्रहाणं तेहंतोपेक्ष्यपक्षंश्रय

टी॰ १प्रत्नुरंयशाज्यंपक्षेप्रत्नुराआजयसंग्रामाः २शास्त्रधियोः ३साहित्यशास्त्रं ४चातुरीशब्दस्यबहुवचनं ५हयग्रीव ६अज्ञानजं

तिजगनिकःकाम्यवेदोक्तकर्मानुष्ठानावश्यकत्वप्रकटनकठिनंवेदचूडार्यमार्गं ९० विश्वावसुः निरूपणनिपुणोपिभवान्क
थमेवंकथयति वेदांतार्थविशोधितंहितपथंव्याधूयसाधूचितंचापल्यादनुरुध्यतेनदितरंपंथानमंधानराः इष्टंभक्षयकांतयाच
विहरेत्येवंप्रियालापिनंरोगार्ताश्चपलारुवंतिनतुतंयःपथ्यवादीभिषक् ९१ किंच आम्नायमौलिगुरुणाकरुणाकरेण
नावातरिष्यतयदीहभवाब्धिनावा अज्ञानभक्तिजगदश्रुतसच्चरित्रमज्ञानशास्त्रमभविष्यदवेदिकंच ९२ पुनरालोच्य
अस्यखलुनिगममौलिगुरोरशेषविद्यासमुद्रतलस्पर्शित्वादधुनातनविबुधव्यूहसमभिव्याहारोनोचितः किंतु निशमय
तियःकिलदशानिशामयत्संप्रिणाच्चयोविश्वं गजतुरगोवदनेयोतैःसहवेदांतदेशिकोगण्यः ९३ विचिंत्य गंभी
रशब्देनविशालमोहदशापिशाचग्रहमोचनेन घंटाहरेर्वेंकटनाथरूपा कल्याणमुल्लासयतिश्रुतीनां ९४ पुनः
सचमत्कारं वेदांताचार्यशब्दोस्मिन्वेदांतस्थापकेक्षमः इमंविवेकंकुर्वंतोदांताचार्यंचतंविदुः ९५ कृ॰ कथंनाम
द्रुहिणगृहिणीचिकुरनिकुरंबचुंबिचंपककुसुमसुकुमारतरांशः कविकथककंठीरवगुरोरपिगिरोदुस्तरप्रस्तरनि 

टीप १ विचारं किंच श्लेषेण इमंवेदांताचार्यशब्दंविगतविवेकं वेशब्दरहितंकुर्वंतोलोकास्तमाचार्यशब्दंचदांताचार्यंब्रुवतेतियुक्तमेवेतिश्रीमद्वेंतोपाह्वय
लक्ष्मणानांलापनकौशलं

षुरवंहिवसास्यहृदयनिभेदायजायंते विश्वावसुः सखेशृणुतावत् वेदांतायगिरःप्रसूनगिरवोमोदंदधानाःसतांश्रो
दश्चावकठोरकाण्यपिपरंभिंदंतिहृद्विद्विषां नंदाद्यार्यजनाभिनंदितमृदुस्पर्शोपिपादोहरेर्दुर्भेदेशकटासुरेतुशतको-
टयाकारमागान्नकिं ९६ पुनःसप्रार्थनमंजलिंबध्वा दर्पाविष्टकुदृष्टिदुष्टसमयोत्सादाययोबोधांकुरोद्भेदायप्रबलेक
लावपिजयोत्पादायवेदाध्वनः श्रीमल्लक्ष्मणपक्षरक्षकबुधामोदायपापाटवीछेदायार्थिमरुत्तरुर्विजयतांवेदांतवि
द्यागुरुः ९७ इत्यन्यतोदृष्टिंविन्यस्यसांजलिबंधं श्रीमान्नाभीरतरवेगवतीप्रतीरभूमावघद्रुहिसरद्गुरिवावतीर्णः
कामादिवैरिगणमुल्बणमस्मदीयंकामासिकानरहरिःकवलीकरोतु ९८ इत्यन्यतश्चक्षुर्निक्षिप्यप्रांजलिःसन्
भयार्तजीवातुदयामहिम्नेवैकुंठधाम्नेकरवैनमांसि आम्नायउक्तःपरमेशितेतिनाम्नायउक्तःपरमत्रचित्रं ९९ युक्तं
न्वेतत् यतोविष्णुःपरमइतिश्रुताश्रुतिः अनपायरमोविष्णुःकस्मादपरमोभवेत् युक्तंरमापतेरन्येदेवास्त्वपरमा
इति १०० किंच जाग्रत्येवशिरांसिनित्यवचसांसर्वोन्नतोशार्ङ्गिणस्तत्रव्यासपराशरादिकृतयोदत्तादरावस्तुतः यः

टी॰ १ वज्रप्रायतां २ कामासिकानामकनगरवासीनरहरिः ३ न आम्नायउक्तइतिविरोधाभासवैचित्र्यं ४ अनुत्कृष्टःलक्ष्मीरहितश्च

पादांबुददातियस्तदुपसंगृण्हातिधत्तेथवायश्चैतच्छिरसैवतेषुपरमंजानातिकोनात्मवान् १ पुनःसच्चमत्कारं दुर्वा
दिनोविष्णुपदारविंददोषापहंनानुसरंतिमोहात् तेषांमतंतुस्वयमत्रविष्णुपदारविंदानुसृतिंविधत्ते २ इत्यन्यतोद
ष्टिंविन्यस्य समंतरूढद्रुमपुष्पनिष्पतन्मरंदसंतत्यभिषिक्तमुत्तमं रविक्रमाश्रुत्वनिरोधिगोपुरंत्रिविक्रमस्यायतनंनिशा
म्यतां ३ सविस्मयममभिध्यायन् अव्यादाश्रयतामनश्वरपदप्रासादनिश्रेणिकाहर्षादूर्ध्वमुदंचितःसच्चरणंस्त्रैविक्रमोनः
क्रमात् त्रैलोक्यार्पणतःसितंशुभयशःच्छत्रंयदासीद्बलेर्द्राधिष्ठोहरिनीलदंडइवयस्तद्धारणायोत्थितः ४ कृत्वानुः
किमरेमायाविनमेनमक्रमंत्रिविक्रममभिनंदसि पश्य श्रीमानपिस्वयंदैत्यात्कुर्वाणःकुप्रतिग्रहं विंदन्समहतींवृत्ति
मिष्टंगोत्रभिदेददौ ५ विशिष्यायमकपटानांकवीनांनश्लाघनीयः यतः नित्यानपायिप्रमदोपिनाथोवटूभवंस्त्वंचिन
दातृकोसौ कविव्यथाकृत्वबलुभूसुरोपिभूदानवत्वंक्षममेवभेजे ६ विश्वा॰ अभ्युपगच्छामएवभवतःप्रौढगुणदोषीक
रणपांडित्यमास्तामेषश्लेषच्चमत्कारः आकर्णयतावदेतत् यदाश्रितरक्षणायपद्मेक्षणःस्वमहत्वाननुरूपमपिरूपमापेदे २६
टी॰ १गगनारविंदं २लक्ष्मीसंपदो ३कुत्सितपृथिव्यौ ४इंद्रकुलनाशको ५भूदैत्यत्वंतत्स्वीकारकर्तृत्वंच

नित्योन्नतोपिनिरपायरमाश्रयोपिदातापिहंतबहुशोमहतांपदानां स्वीकृत्यवामनवपुःश्रितमिंद्रमीशःपातुंपदत्रितयमत्रबलिंबिभि
क्षे ७ पुनःसप्रसक्तिप्रकर्षम् त्रैविक्रमस्त्रिपथगाजनकःसपादःपायात्सुरस्यमरुतांमरुतांनिहंता शंभोस्फुरन्मकुटभूषणदानचंचु
मंभोनिधेःश्वशुरमाशुगिरोयमाहुः ८ इतिकिंचित्परिक्रम्य अत्रहिकांचीनगरविभूषाकामाक्षीकल्पमंजरीभजताम् रक्षास्फुरसे
नानांराजतिशर्वस्यसर्वस्वम् ९ निरूप्यसविस्मयानंदंकामाक्षीमामंत्र्य दंतश्रीस्तवदृश्यतेयदितदःकुंदननिंदंतिकेवच्छकेयद्यभि
लक्ष्यतेबुधजनश्चेद्दृंनसंद्रक्ष्यति दृष्टेदृष्टियुगेपुनर्नविजुयाद्यालोपिनीलोत्पलंसूक्तिश्चेदनुभूयतेमधुरताकामाक्षिकामाक्षिके १०
कृ॰ ॥ यद्यपिविद्यतेकामाक्ष्याःसर्वाभिनंदनीयंसौंदर्यम् तथापिमुधातदितिप्रतिभाति तथाहि कांतोविरूपाक्षइतिप्रती
तःकामस्यहंतागिरिराजपुत्र्याः स्तंबेरमास्यस्तनयोपितस्यालंबोदरःकिंफलमाभिरूप्यम् ११ अनयोःखल्वंबिकात्र्यंबकयोःदांपत्य
मननुरूपमितिव्यक्तमेतत् इयंहिसर्वमंगलासतुस्मशानेमंदिरोविभातिहैमवत्यसौसयातिदिक्षभिक्षुकः इयंतुकुंकुमांकितासभ
स्मराशिरूषितोप्यरालकुंतलाचसाजटाभिरेषभीषणः १२ वि॰ वयस्यमेवंवादीः नखल्वप्रशस्तैरप्यावासवासःप्रभृतिभिः
१स्वभक्तं २निर्जलत्वं ३शिवः श्लेषेतु२ विरूपेकुत्सितेअक्षीणीति ४ मंगलविरुद्धंस्मशानं ५ सुवर्णालंकृता हिमनगकन्याच

सांसिद्धिकमभिरूपाणामाभिरूप्यमपहीयते निवस्तावाक्कृत्तिंनिवसतुचिरंवापितृवनेशिवस्तावस्यत्वामहिगणमथाप्येपसुभगः परीतंशैवा
लैरुषितमपिपंकेषुमलिनानलीनाबिभ्राणंकिमिहकमनीयंनकमलम् १३ किंच रमणीयः सहिपुरुषोरमणीयत्वेषुरज्यतिविदग्धा
श्लोकः सएवसुभगश्चित्तंसुक्तंहियत्ररसिकस्य १४ अवधार्यतामतिमात्रमत्रेदंविचित्रम् शिवास्यालोकितः कामोजितइत्येवसुस्त
म व्यत्यासोत्रजितोयस्मात्कामास्यालोकनःशिवः १५ पुष्कलंकिलपुत्रभाग्यमपिपर्वतराजकन्यायाः यतः कुशलीभुनाथवक्त्रः पुत्रः
प्रथमोहिमाद्रितनयायाः पंचास्यास्तितुरधिकःषडाननोनंदनोद्वितीयोस्याः १६ इत्यन्यतः किंचित्सरिक्रामन्सामोदम् शशांकमौ
लिःसहकारमूलेकैलासवासीसइहाविरास्ते यस्याग्निर्मूर्द्धकृत्तनूभवश्चयोषापिभूषापिचनागराजी १७ सु॰ वयस्यकिंवर्णय
सिविश्वविलक्षणचरित्रंरुद्रंलोकेहिलोचनशैत्यसंपिपादयिषयायतमानान्जनानेवपश्यामः अयंतुपशुपतिस्स्थाणुरितिस्वाह्वयम
न्वर्थयन्निवआशुशुक्षणिमक्ष्णिनिक्षिप्तवान् वि॰ अवधेहितावदभिधास्यामिरहस्यं अंगानुषंगोदितसीतबाधामिंदोर्धुसिंधो
श्चसमन्वयेन ॥ हर्तुंवहत्यग्निमयीतृतीयांहरोहसंतीमिवहंतदृष्टिम् १८ सु॰ हंततर्हितुहिनकिरणत्रिकलासुरसरिद्झरीशिशि २७

टी॰ १ मनोज्ञानाम् २ भ्रमरान् ३ पार्वती कामाक्षिकामनेत्रंतेनजितइतिविरोधः ४ एकाम्रेश्वरनामाशिवः ५ गृहैः अग्न्युसन्निस्थानंच ६ अंगारपात्रं

रशिरसस्त्रिपुरहरस्यकथमभिषेकप्रियता ततश्च गंगातरंगावलिभिःसुधांशोःसुधाझरैश्चानिशमार्द्रमूर्ध्नः वृथाभिषेकंकलयंति
शंभोस्तृतायतोयस्यददत्यपङ्के १९ वि॰ अत्रापिसुक्तमुत्तरंव्याहरामि ज्वलनाकलनाद्विषस्यपानाद्विषभाजांवहनाच्चतप्तमूर्तेः
अनिशंत्रिदशापगाधरस्याप्यभिषेकप्रियताशिवस्यजाता २० सु॰ अस्त्विदमथाप्यन्यदपिनयुज्यते किमसौविहायविहायसंसं
ततंशंकरशिरसिगंगातरंगांतःप्रतिवसतिमृगांकःकृशांगः वि॰ शृणुसखेतत्रकारणम् शिवशिरसिसीतभानुःसागरसूनुत्वसू
चनायपरं अधिवसतितन्महिष्यागंगायाजठरमल्पतनुरेषः २१ सु॰ तथापिलुब्धएषफलप्रेप्सुभिरनादृत्यः तथाहि सूक्ष्म-
सितांशुकलाभेप्यपटोहैमधरपदनिविष्टोपि लुब्धोयमयोहस्तस्तंडुलसत्वेप्यटत्यहोभिक्षाम् २२ अन्युदल्पमिदमुच्यते यच्छंकरसं
गाङ्गगायामपिजीवनदायिन्यांसंक्रांतातद्गतालुब्धता पश्य मुक्ताश्रितापिविष्णुपदादुदीतागांगेयसुताद्यवसुप्रकृष्टम् प्राप्यापिरत्ना
करनित्यसंगंकपर्दिकाशांनजहातिगंगा २३ अन्यच्च सर्वतोसुखसमृद्धिजुषोप्यसौंडरीकधनवासनयापि यत्तयाप्यवधिजन्हुमखसू
त्तत्रघातिचिरसंगतिदोषात् २४ पुनर्विमृश्य ईशःकरस्थीकृतकांचनाद्रिःकुबेरमित्रंरजताचलस्थः तथापिभिक्षाटनमस्यजातंविधौ रि

टी॰ १ एकदलः २ चंद्रः वस्त्रंच ३ शुभ्रंलोहं ४ तंडुगणस्तेनलसतीतिनस्यभावस्तत्वं ५ मौक्तिकानिमुक्ताश्च ६ भीष्मः सुवर्णंच ७ द्रव्यंवसवश्च ८ देवेचंद्रश्च

शिरस्येकुटिलेकुतःश्रीः २५ किंत्वेषविरुद्धधर्माकृत्तिवासानस्तोतव्यः शृणुतावत् धत्तेमहोमूर्ध्नितदोषधीशमौषर्बुधंभालतलेगंकेश
फणींद्रमौलिस्थमणिप्रसूतंहरोंधकारित्वमथाप्युपेति २६ अपिच तारकारिंवहन्नंकेमस्तकेतारकाधिपं अंगीकुर्वन्स्के दृशमप्यलो
कात्सोविभात्ययम् २७ वि॰ किमेभिःशब्दश्लेषैकशरणैर्दूषणैरस्यखलुमृत्युंजयस्यविश्वस्तुत्यमसदृशंवदान्यत्वं दीर्घायुर्मुनिसू
नवेप्रददेदिव्यंतथाभीष्टंप्रख्यातायभगीरथायभग वत्सादामृतंप्राददात् पापेभ्योपिचबाणपंक्तिवदनप्रष्ठेभ्यइष्टंफलंप्रादात्तस्यशि
वस्यभातिजगदाल्हादायवादान्यकम् २८ कृ॰ तदेतद्व्याहतंभाषितम् यन्महादेवस्यवादान्यकंजगदाल्हादायेति यतः दत्त्वावरा
न्दानवराक्षसेभ्योविश्वस्यचस्वस्यचयोविषादम् संपादयामासशशांकमौलिर्दातृत्वमेतस्यतवैवहृद्यम् २९ वि॰ कुटिलधिषणागुण-
मपिदोषइतिघोषयतिभवान् तथाहि दैत्येभ्योनवरान्सदास्यतियदिव्यक्षोमुहुस्तर्हितेनाशक्ष्यन्भुवनस्यपेष्टुमुदयंनाप्स्यद्दयाशार्ङ्गि
णः नोदायिष्यतमानुषादिषुहरिर्नोसेतुगीतादिकंप्रार स्यद्भगवान्भवार्णवमर्मानालंघयिष्यन्नराः ३० किंच पपातरंगशिशिरानि
लडिंभजातकंपाम्भनिष्पातितपुष्परसाभिषिक्तः संपादयत्यतुलसंपदमर्थिनोनुकंपास्कंधांबुधिरयंपतिरंबिकायाः ३१ पुनर्निरीक्ष्य २८

टी॰ १स्कंदं २ स्थिरं दृष्टिंच ३ कु त्सितंभालंच ४ अग्रेसरः ५ औदार्यं ६ एकाम्रेश्वरसमीपवर्तिसरः

निस्योन्नतोपिनिरपायरमाश्रयोपिदातापिहंतबहुशोमहतांपदानां स्वीकृत्यवामनवपुःक्षितिमिंद्रमीशःपातुंपदत्रितयमत्रबलिंविभि
क्षे ७ पुनःसभक्तिप्रकर्षम् त्रैविक्रमस्त्रिपथगाजनकःसपादःपायात्सुरस्यमरुतांमरुतांनिहंता शंभोस्फुरन्मुकुटभूषणदानचंचु
मंभोनिधेश्चशफरमात्तगिरोयमाहुः ८ इतिकिंचित्परिक्रम्य अत्रहिकांचीनगरविभूषाकामाक्षीकल्पमंजरीभजताम् रक्षाकरसे
नानाराजतिशर्वस्यसर्वस्वम् ९ निरूप्यसविस्मयानंदंकामाक्षीमामंत्र्य दंतश्रीस्तववदृश्यतेयदिततःकुंदननिंदंतिकेवक्त्रंयद्यभि
लक्ष्यतेबुधजनश्चंद्रंनसंद्रक्ष्यति दृष्टेदृष्टियुगेपुनर्नविनुयाद्दालोपिनीलोत्पलंसूक्तिश्चेदनुभूयतेमधुरताकामाक्षिकामाक्षिके १०
कृ॰ ॥ यद्यपिविद्यतेकामाक्ष्याःसर्वाभिनंदनीयंसौंदर्यम् तथापिमुधातदितिप्रतिभाति तथाहि कांतोविरूपाक्षइतिप्रती
तः कामस्यहंतागिरिराजपुत्र्याः स्तंबेरमास्यस्तनयोपितस्यालंबोदरःकिंफलमाभिरूप्यम् ११ अनयोःखल्वंबिकात्र्यंबकयोःदांपत्य
मननुरूपमितिव्यक्तमेतत् इयंहिसर्वमंगलासतुस्मशानमंदिरोविभातिहैमवत्यसौसयातिदिक्कभिक्षुकः इयंतुकुंकुमांकितासभ-
स्मराशिरूषितोप्यरालकुंतलाचसाजटाभिरेषभीषणः १२ वि॰ वयस्यमैवंवादीः नखल्वप्रशस्तैरप्यावासवासःप्रभृतिभिः

१ चमत्के २ निर्जलत्वं ३ शिवः श्लेषेतु ३ विरूपेकुत्सितेअक्षीणीति ४ मंगलविरुद्धंह्येतत् ५ स्वर्णालंकृता हिमनगकन्याच

सांसिद्धिकमभिरूपाणामाभिरूप्यमपह्नीयते निवस्त्तांवाक्रुत्तिंनिवसतुचिरंवापितृवनेशिवस्तावस्यत्वामह्निगणमथाप्येषसुभगः परीतंशैवा
लैरुषितमपिपंकेषुमलिनानलीनाबिभ्राणंकिमिहकमनीयंनकमलम् १३ किंच रमणीयःसहिपुरुषोरमणीयत्वेवरज्यतिविदग्धा
श्लोकःसएवसुभगश्चित्तंसक्तंहियत्ररसिकस्य १४ अवधार्यतामानिमात्रमत्रेदंविचित्रम् शिवास्यालोकितः कामोजितइत्येवसुश्रु
म व्यत्यासोत्रजितोयस्मात्कामास्यालोकनःशिवः १५ सुष्कलंकिलपुत्रभाग्यमपिपर्वतराजकन्यायाः यनः कुशलीमनाथवक्रःपुत्रः
प्रथमोहिमाद्रितनयायाः पंचास्यास्तितुरधिकःषडाननोनंदनोद्वितीयोस्याः १६ इत्यन्यतः किंचित्सरिकामन्त्सामोदम् शशांकमौ
लिःसहकारमूलेकैलासवासीसइहाविरास्ते यस्याग्निभूर्द्वकुचननूभवश्च योषापिभूषापिचनागराजी १७ सू० वयस्यकिंवर्णय
सिविश्वविलक्षणचरित्रंरुद्रंलोकेहिलोचनशैत्यसंपिपादयिषयायतमानान्जनानेवपश्यामः अयंतुपशुपतिस्थाणुरितिस्वाख्यम
न्वर्थयन्निवआशुशुक्षणिमक्ष्णिनिक्षिप्तवान् वि० अवधेहितावदभिधास्यामिरहस्यं अंगानुषंगोदितसीतबाधामिंदोर्द्धसिंधो
श्चसमन्वयेन ॥हर्तुंवहत्यग्निमयीन्तृतीयांहरोहसंतीमिवहंतदृष्टिम् १८ सू० हंततर्हितुहिनकिरणश्चाकलासुरसरिद्धरीशिशि 

टी० १मनोज्ञानाम् २भ्रमरान् ३पार्वती कामाक्षिकामनेत्रं तेनजितइतिविरोधः ४ एकाम्रेश्वरनामाशिवः ५ गुहः अन्युसन्निस्थानेन ६ अंगारपात्रं

रशिरसस्त्रिपुरहरस्यकथमभिषेकप्रियता तत्रश्च गंगात्तरंगावलिभिःसुधांशोःसुधाझरैश्चानिशमार्द्रमूर्ध्नः वृथाभिषेकंकलयंति
शंभोस्तृसायतोयस्यददत्यपःके १९ वि० अत्रापियुक्तमुत्तरंव्याहरामि ज्वलनाकलनाद्विषस्यपानाद्विषभाजांवहनाच्चतप्तमूर्त्तेः
अनिशंत्रिदशापगाधरस्याप्य भिषेकप्रियताशिवस्यजाता २० सू० अस्त्विदमथाप्यन्यदपिनयुज्यते किमसौविहायविहायसंस
ततंशंकरशिरसिगंगातरंगांतःप्रतिवसतिमृगांकःकृशांगः वि० शृणुसर्वेतत्रकारणम् शिवसिरसिसीतभानुःसागरसूनुलस
चनायपरं अधिवसतितन्महिष्यागंगायाजठरमल्पतनुरेषः २१ सू० तथापिलुब्धएषफलप्रेप्सुभिरनादृत्यः तथाहि सूक्ष्म-
सितांशुकलाभेप्यपदोहैमधरपदनिविष्टोपि लुब्धोयमयोहस्तस्तंडुलसत्वेप्यटत्यहोभिक्षाम् २२ अन्युदल्पमिदमुच्यते यच्छंकरसं
गाइंगायामपिजीवनदायिन्यांसंक्रांतातद्गतालुब्धता पश्य सुत्कौशिताविष्णुपदादुदीतागांगेयमुत्साद्यवसुप्रकर्षम् प्राप्यापिरत्ना 
करनित्यसंगंकपर्दिकाशांनजहातिगंगा २३ अन्यच्च सर्वतोसुरवसमृद्धिजुषोद्यपौंडरीकघनवासनयापि यत्तयाप्यवधिजन्तुमरवस्त
स्तत्रघातिचिरसंगतिदोषात् २४ पुनर्विमृश्य ईशःकरस्थीकृतकांचनाद्रिःकुबेरमित्रंरजताचलस्थः तथापिभिक्षाटनमस्यजातंविधौ

टी० १एकलः २चंद्रः वरुणंच ३ शुभंलोहंच ४ तंडुर्गणस्तेनलसतीतितस्यभावस्तत्वं ५ मौक्तिकानिमुक्ताश्च ६ भीष्मः सुवर्णंच ७ द्रव्यंवसवश्च ८देवंचंद्रश्च

शिरस्थेकुटिलेकुतःश्रीः २५ किंचैषविरुद्धधर्माकृत्तिवासानस्तोतव्यः शृणुतावत् धत्तेमहोमूर्ध्नितदोषधीशमोषर्बुधंभालतलेंगकेषु
फणींद्रमौलिस्थमणिप्रसूतंहरोंधकारित्वमथाप्युपैति २६ अपिच तारकारिंवहन्नंकेमस्तकेतारकाधिपं अंगीकुर्वन्स्के दृशमप्यलौ
काक्षोविभात्ययम् २७ वि॰ किमेभिःशब्दश्लेषैकशरणैर्दूषणैरस्यखलुमृत्युंजयस्यविश्वस्तुत्यमसदृशंवदान्यत्वं दीर्घायुर्मुनिसू
नवेप्रददेदिव्यंतथाभीष्टंप्रख्यातायभगीरथायभग वत्सादामृतंप्राददात् पापेभ्योपिचबाणपंक्तिवदनप्रष्ठेभ्यइष्टंफलंप्रादात्तस्यशि
वस्यभातिजगदाल्हादायवादान्यकम् २८ कृ॰ तदेतद्व्याहृतंभाषितम् यन्महादेवस्यवादान्यकंजगदाल्हादायेति यतः दत्त्वावरा
न्दानवराक्षसेभ्योविश्वस्यचत्वस्यचयोविषादम् संपादयामासशशांकमौलिर्दातृत्वमेतस्यतवैवहृद्यम् २९ वि॰ कुटिलधिषणगुण-
मपिदोषइतिघोषयतिभवान् तथाहि दैत्येभ्योनवरान्सदास्यतियदिव्यक्षोसुहृत्तर्हितेनाशास्यन्भुवनस्यपेष्टसुदृयंनाप्स्यद्दयाशार्ङ्गि
णः नोदास्यिष्यतमानुषादिषुहरिर्नोसेतुगीतादिकंप्रारस्यद्भगवान्भवार्णवममीनालंघयिष्यन्नराः ३० किंच पपातरंगाशिशिरानि
लडिंभजातकंपाम्रनिष्पतितपुष्परसाभिषिक्तः संपादयत्यतुलसंपदमर्थिनोनुकंपास्कधांबुधिरयंपतिरंबिकायाः ३१ पुनर्निरीक्ष्य 
टी॰ १स्कंदं २ स्त्रियं दृष्टिंच ३ कु त्सितं भालंच ४ अग्रेसरः ५ औदार्य ६ एकाम्रेश्वरसमीपवर्तिसरः

त सश्लाघम् अस्योपिकांच्यामावासादासादयतिगौरवम् यतएतेंपुरस्थाणुर्गिरिशइतिगीयते ३२ कृशा॰ अन्योन्यविरुद्धस्वभावा
भ्यांदेवाभ्यामाक्रांतांनगरींकिंविनौषि देवौद्वावधिकांचिपश्यलसतःप्राचीप्रतीच्याशयोस्तत्रैकःकुरुतेविनायकमथश्चित्रंपुरस्त्वा
परः एकोनित्यमनङ्गमूर्तिरितरःख्यातोष्टमूर्तिर्जगत्येकोवारितवान्गजातिमपिचिरन्दूतेगजातिंपरः ३३ यद्वा कांचीनाम्निपुरेस्फु
रेंद्रमहिते प्राकूपश्चिमोद्देशयोश्चित्रंदैवतयोश्चिरंनिवसतोरीतिर्विरुत्थामिथः एकोहिद्विजराजमप्यधरयत्यन्यस्तमुत्तंसयत्यंभोहं
तबिभर्तिकश्चिदपरःस्वेमूर्धनिस्वर्धुनीं ३४ विरुद्धदेवाक्रांतकांचीनगरसमागमाद्धारणधराधरोप्येवं तथाहि भेत्तास्तिगोत्राच
हरिर्महासवजुषोहिरण्यगर्भस्य भयकृदिभस्याभयकृन्मूलांचलयोश्चकास्तिहस्तिगिरेः ३५ अयंचापरोदोषः दराग्नुषंगंचगंदान्व-
यंचत्यक्तुंजनायेनिवसंतिकांच्याम् दंताबलादीश्वरमाश्रितास्तेदेहक्षयेतौनियतंभजंते ३६ वि॰ सरवेमेवंसंभाषिष्ठाः यतएकरू
पदैवतमिदंनगरमितिसमर्थ्यते शृणुतावत् फणिपतिसरःस्फुरंतीभनायकधरोत्तमांगशोभितनुः भवहरिसंज्ञाकांच्योःपूर्वापरयोर्हि
देवताजयति ३७ अन्यच्चास्यनगरस्यभूषणमेवनतुदूषणमित्यन्यत्रदृष्टिमाधायसानंदम् अहोखलु ममाद्यपच्चेलिमंभागधेयम्
टी॰ १पुरस्थोऽणुः पुरसंबंधिस्थाणुरितिच शिवश्च २ गरुडः गणेशश्च ३ गजेंद्रार्तिम् ४ अक्रूरः ५ गरुडचंद्रौ ६ भयं शंखश्च ७ रोगापकधयोः

श्रुं१र्योवतोपगीतः प्रातः पद्माननोमुनिर्ध्यातः व्यासकृतोयः रव्यातः पांडवदूतः सहकृपयंनीतः ३९ ॥कृ॰॥ अनुचितकर्मासौकिमर्थमनु
वर्ण्यते सकलजगतामीशानोपिस्वयंविगतश्रियामिदमनुचितंदूतोजातोयएषपृथासुताम् किमिहमहतांहृद्यारव द्योतपोतनिकेतनेचिर
मधिपतेर्मासांदासानुदासतयास्थितिः ३९ वि॰ पुरोभागिन्भगवद्गुणेषुदोषमनीषयाभवानेवदुष्यति श्रूयतामेतत् कवित्वस्य
गांभीर्यमौदार्यमूर्द्धन्यभक्तत्वस्यशौर्यगुरुत्वस्यविद्याम् महावंश्यतायाः सदाचारमूर्त्तिं महत्वस्यसौलभ्यमाकल्पमाहुः ४० इत्यपरत्रविमा
नमानयन्सानंदम् अत्रहि विकचरुचिरपुंडरीकखंडद्युतिमदमोचनलोचनप्रभावः जयतिविजयराघवःसदेवःश्रुचितरगृध्रसरोवरो-
पकंठे ४१ किंच संपातिसोदरसरस्तटसंप्ररूढोभात्यद्भुतोविजयराघवपारिजातः शौरिवाततरुपरिसद्भिरुदीक्ष्यंतेयोयस्याधएवसकलः
श्रुमनःप्रपंचः ४२ पुनःसभक्तिप्रकर्षंजनानुद्दिश्य भोभोभक्तिमुक्तिप्रेप्सवइदंशृण्वंतुभवंतः विश्रुताश्रितवात्सल्यंवीरंविजयराघवम्
नमस्कुरुतयोगृध्रंसमस्कुरुतदाहतः ४३ अत्रचगृध्रपतिक्षेत्रेविश्वप्रसिद्धाकाचिद्दैचित्री तनयार्थनयासमागताभिस्तरुणीभिःपरि
भर्जिताश्चमुद्गाः दृढमंकुरमत्रदेवशक्त्यासममासांपुलकांकुरैःफलंति ४४ कृ॰ निजमहिमानुरूपस्थितिरसौविजयराघवःकि- २९
टी॰ १अप्सरोगणः २ एतन्नामादेवः ३ वेदःशिफाच ४ देवपुष्पयोः ५ दाहसंस्कारमकरोत्

मीडयते श्रुकैःस्तुतोहंसैमयूरैरवाहःसुखप्रगीतोगरुडासनोसौ क्षीराब्धितीरावसथोपिवासंकरोत्यहोगृध्रसरोंतिकेस्मिन् ४५ वि॰
तदेतद्दयापयोधेरेतस्यभूषणमेवनतुदूषणम् तत्ताहशुत्तमपदेतमसःपरस्तादस्तामयैरतुलसूरिभिरर्चितोपि अत्राविरस्तिहरिरेष
चिरान्नराणांदृष्टिंकृतार्थयितुमेवदयानुकंपः ४६ इतिदक्षिणतोविमानंप्रस्थापयन्सहर्षम् इयंहि गंगासिंधुसरस्वतीभवहरात्तं
गापतंगात्मजारंगाभ्याशतरंगिणीवदघतत्यंगारभंगावहा श्रुग्धाराशमनीमनीषिजनतारब्धावगाहासुहुर्मुग्धानामपिश्रुद्धुत्विज
ननीदुग्धापगादृश्यते ४७ किंच ममदुग्धनदीधनदीकृतमज्जन्मानवानवांभोभिः बुधजातनुतानुतांतनुतांतनुतापकध्व
नाघानाम् ४८ कृ॰ भवत्वेवमथाप्यस्याःक्षीरतरंगिण्याविधिनाकृताविरसता कालुष्यलेशाविधुरामधुरापिपयोनदी रोचेत
साधवेयुक्तानोचैल्लवर्णसिंधुना ४९ वि॰ गुणमपिभणसिदोषतया यतःक्वचनसमागतसिंधुनिधुनीजलेसाधुनिरस्नानम् पं
कविलोपंकलयतिसंघटयतिश्रियमितिस्मरंतिबुधाः ५० किंचिद्दक्षिणतोभिक्रम्य मोहादिदोषरहितांतटवासिदेहिव्यूहायकाम
पिमतिंमहतींदिशंती स्वाहाकरोतिदुरितानिश्रुभप्रवाहाबाहानदीबुधसमूहकृतावगाहा ५१ अस्याश्चोत्तरतीरेश्रोत्रियोत्तंसवा
टी॰ १श्रुकाचार्यःपक्षीच २ परमहंसाः ३ षडाननः मयूरोवाहश्चेति पृथगपिश्लेषे ४ छंदोमयासनत्वंसूचितं ५ देवहृदकृता ६ रत्नयुतु ७ कार्श्यं ८ लवणयोगेपयसोनिषिद्धत्वाद
नादेयत्वमस्याः

सयोग्यः समग्रगुणोसावग्रहारः संलक्ष्यते पश्य कर्णानंदकरस्फुरन्मधुकरव्याहारवाहापगारोधःशाखिमरंदतुंदिलपयःकल्याण
कुल्यावृतः आत्रेयान्वयविद्वदध्वरहविर्गंधानुबंधार्पितक्ष्मेमोभात्यरशानिफालइतिहिग्रामोभिरामाभिधः ५२ किंच साध्वग्रेसरयूपेतः
साकेतनगरश्रियम् अग्रहारोविभात्येषरघुनाथाभिरक्षितः ५३ किंचिद्विमानुसुन्नमध्यसम्लाघं नद्योःपार्श्वद्वयमवलोक्य चारुगु
णैःसन्मणिभिर्जुष्टावाहानदीपयस्विन्योः उपकूलमग्रहाराउदग्रहाराइवावनेर्भांति ५४ कृ॰ अमून्ग्रामान्कथंकारमग्रहारा-
न्प्रचक्षते कृत्स्नसुक्कारहितायदेनानाश्रिताजनाः ५५ वि॰ भवतास्कनिरेवएषांभंग्यंतरेणकृतेतिमृष्यामितृष्यामिच अथस
र्वतस्कंडीरमंडलमवलोकयन् सहर्षातिरेकंवयस्यस्फुटमस्यतुंडीरमंडलस्यपश्यतुभवान्पावनत्वंरमणीयत्वंच तीरेतीरेस्फुरतिस
रितामग्रहारोत्रभूयानग्र्योवर्गोधरणिमरुतामग्रहारेग्रहारे वर्गेवर्गेधरणिमरुतांवर्ततेसाधुयज्ञोयज्ञेयज्ञेश्रवणकृभगस्तोत्रशास्त्रो
नुघोषः ५६ किंच तुंडीरमंडलनिवासिषुदुग्धसिंधुडिंडीरखंडनिभकीर्तिषुपंडितेषु आप्यार्य्यमानमखिलेरविगीतमेतद्रोचेत
धूतदुरितंचरितंनकस्मै ५७ कृ॰ हंतेतस्मिन्नंतिमयुगेपिअध्वरकर्माचरतामभीषांचरितानिकथमिवरोचेरन्कोविदेभ्यः नकलि

टि॰ १विद्यादयःसत्वंच २उत्तमस्कृद्विप्रार्पितोग्रामश्च ३उत्तमरत्नानिसाधवश्च ४श्रेष्ठा ५ब्राह्मणाः ६मंत्रविशेषाः ७फेनः ८सेव्यमानं



क्संपत्तिर्नचकुशलतायष्टुरनघानचद्रव्यंशकृद्वं नचहृदयशकृद्विःकलियुगे प्रसिद्धिंकांक्षंतःपरिमितधनंहंतकृपणावृथापश्वालंभंविदधति
तथापिक्षितिसुराः ५८ किंच शौचंनाचरितंयथाविधिकलौशक्ताद्विजाःकिंचतेयेखल्वाचमनाप्लवादिनियमास्तान्स्मर्तुमप्यक्षमाः
कामीषांपुनरग्निहोत्रनियमःकेषेरनुष्ठानधीः क्वाग्निष्टोमसुखामखाःसपशुकाः क्वात्याग्निचित्यादयः ५९ वि॰ स्थूलमनीषमृष
कृमितिभाषसे यतः शिष्टेभ्यःप्रतिगृह्यवित्तमुचितंसंपाद्यविद्यांकलौश्रद्धालून्श्रुतिकल्पसूत्रचतुरान्लब्ध्वाशुचीन्ऋत्विजः प्री
तिंभागवतीमकाममभिसंधायाहरंतःक्रतून्धीमंतोयुगमंतिमंतुकृतेयंत्यंतसुखाःसंततम् ६० किंच अयज्ञाहद्रव्याबयमि
तितुयज्ञाद्विरमतांनकल्पतस्वान्नैनेनुभगवदाराधनमपि प्रयत्नेनद्रव्यंशुचिकिमपिलब्ध्वाभगवतः कृतंचेल्लैकंर्यकिमितिनुन
देवाध्वरमयम् ६१ अपिच हिंसाकृत्स्नत्ववेयादितिकथयतियोवेदएवेषयागपश्वालंभंविधत्तेयदिकइहमखेवैदिकःसंशयीत ॥
हिंसात्वाभावमेवाध्वरपशुनहलेराहरामानुजार्यस्तत्स्क्षस्योपियोनुप्रसूजतियजनेकस्तदन्योगुरुद्विट् ६२ इदंचावधेयम् हिंसां
तरेषिवमखाश्रितहिंसनेपिजैनेतरोयदिजनोभजनेजुगुप्सां॥ नायंतरेषिवनविंदतिनंदनानांनिष्पादनंकिमनघेपिनिजेकलत्रे ६३

टी॰ १पशुहिंसनं २कलिसंज्ञे ३कृतयुगवत् कुर्वंति ४अपनिषिद्धाः ५प्रत्यवायंप्राप्नुयात् ६संशययुक्तोभवेत् ७प्रवर्त्तते

इदमप्यवगंतव्यम् ऋत्विकृविरूद्धिविरहादतिशंकयाचेके चित्कलौ जहतिनित्यमपिक्रतुंते मुंचंतिगुर्वशक्तिताविशयेंनकिंनचक्रांकवैष्णा
वमनुग्रहणादिसर्वं ६४ किंच सर्वैर्वेदैः स्मृतिगुणयुतैः सेतिहासैः पुराणैः शिष्टाचारैरपिनियमितानध्वरान्मध्वरातेः आज्ञासिद्धानहहजहत
स्तद्विरुद्धानिकृत्यान्यातन्वंतः कतिचिदितरानप्यमी शिक्षयंति ६५ किंबहुना यागंयेबतवैष्णवाविजहति छागछिदाभीतितः शिष्यक्लेश
नसाध्वसाज्जहतुतेचक्रांकनप्रक्रियाम् पूर्वस्मिन्बहुसंमतिर्भगवतः प्रीतिः फलंनोधनान्यस्मीयोभिमतिः परत्रफलमप्यर्थासिरित्यंभिदा ६६
कृ॰ विहस्य नपाभ्यांशंखचक्राभ्यांतापनंप्राणिनामिदं छागालंभसमत्वेनसाधोकिमितिवर्ण्यते ६७ वि॰ गुणदोषतारतम्यानभिज्ञश्शृणुत्ता
वदिदम् छागालंभसहस्रतः क्षितिसुरस्यैकस्यहिंसाधिकातस्माद्ब्राह्मणतापनंनकिमिदंतुल्यंपशोर्हिंसयाशास्त्रात्तत्तरथांगधारणमपिश्रेयस्क
रंचेत्तदावेदैरेवसवेपशोर्विशसनाद्धर्मोपिकिंहीयते ६८ इत्यलंश्रुत्यनुमतविहितसवनकरणावश्यकतासमर्थनेनकरबदरास्तित्वसाधकप्रमाणांतरपरिक
ल्पनाकल्पेनेतिदक्षिणतोविमानंयन्सशिरःकंप स्वंजीकृतारिवलहृदारमणीमणीनांमंजीरमंजुतरशिंजितरंजितेन चंजीपुरीयुवगणेनचकास्तिपू
र्णासंजीवितोग्रपरिवंचितपंचबाणा ६९ किंच ऋक्सामयोश्चयजुषांचनिवासभूताः पूताद्विजाः स्मृतिपुराणकलाधुरीणाः कुर्वंतिवासमिहकर्कशतर्क—

टी॰ १ संशयः २ समुद्रा ३ मंत्रोपदेश ४ मुद्राधारणप्रकारः ५ हिंसया ६ सहस्राणि ७ विक्लीकृत ८ शिवः





शब्दनंत्रयीशिख रसिंधुतलस्पर्शोर्मी ७० कृ॰ सहासं नैतद्विभातिनगरंनगरस्यदुर्गप्राकारसाधनदशास्कविशांपतीनाम् फ—
ट्टोन्नमद्रुदशिरस्तटनिसृतासृक्स्रोतःसहस्रभरविस्रपलास्थिसांद्रम् ७० वि॰ वयस्यगुणान्वयस्यपुनरस्यनगरस्य निंदाछद्मना
प्रशंसामेवभवान्कृतवान् यतः पुरातनानांहिपुरंतराणांप्रशोधितारोपिदिशास्कभूपाः पुरंतदेतद्दुपुरंतमोजो हंताभ्यपेत्याप्य
लमर्थयंते ७२ कृशा॰ निरूपणमभिनीयसास्वरसंहंतचिरंतनानामिदानींतनानां चवस्कंधराधुरंधराणांअवारणीयोसाव
विवेकः पश्य प्राज्येहंतधनेस्थितेपिनृवरोस्मज्येपिसत्यूर्जितेसंभोगानुगुणाविलोचनगुणे रंभोजदंभद्रुहः कल्याणीस्तरुणीरु
पेक्ष्यकरुणाहीनःससेनःस्वयंहर्तुंशत्रुधरांचिरादभिलषन्मर्त्तुंरणेजृंभते ७३ वि॰ विरुद्धबुद्धेविवेकमेवतावदविवेकमाकलय
सि तथाहि संपद्वन्यसरिज्झरीसहचरीशंपासमंप्राभवंनायः सूर्यकरावलीढरजनीछायासकृद्यौवनाः देहः स्नेहविहीनदीपसखुद्
त्यालोच्यपृथ्वीश्वराःप्राणान्जुह्वतिनाकमाकलयितुंशक्राहिसुद्धानले ७४ शृणुसखेचमत्कारं रक्तेभटेरणसुखेरुधिरेणतस्मिंरक्त
भवत्यमरयोषिदनुव्रतेव ॥ शूरः सचेदतनुसायकखंडितांगःसाप्युच्चकैरतनुसायकखंडितेव ७५ किंच दीप्तोतिप्रभमाश्रितक्षि

टी॰ १ अधिपतयः २ संग्रामः ३ स्वीकृत्य ४ क्षुद्रनदीवत् स्वल्पकालस्थायिनी ५ विद्युत् ६ भफलं ७ अनुरक्ता ८ कामबाणः

तितरुंदिव्योविमानेस्थितोगाढाश्लिष्टकृपाणपाणिकरजग्रस्तामरस्त्रीस्तनः तत्संदत्तनखक्षतोबहुतरंप्रत्यर्थिबाणक्षतं मुह्यन्मोहुत
जीवितंनिजवपुर्वीरोमुदावीक्षते ७६ इत्यन्यत्रविमानंसंचारयन्परितोदृष्ट्वा पिनाकिनींपश्यघनाघनाशिनींजलाच्चलक्ष्मींगरुडापगा
मपि इदंतवेराजतिदेवनायकः परोत्रसर्गादिवदेवनायकः ७७ इतरत्रविमानंप्रस्पंदयन्सानंदम् अद्यप्र त्वंपश्चिमंसच्चरित्रंदेवः
प्रीतःस्वप्रभातानिशामे श्रीमुष्णंयन्मुष्णादंहःसहस्रंक्षेत्रंप्राप्तंनेत्रयोःपात्रभावम् ७८ अत्रहि वरवराहरूपिणीचराचरांतरस्थि
तास्फुरास्फुराद्युसेविताधराधरादिदेवता सदासदावलिस्फुतामुदामुदारसेवधिर्हिताहितोर्क्ष्यकेतनानतानतापतांनयेत् ७९ श्रीम
त्कवींद्रश्वात्रकश्चिदित्थमनुसधत्ते सदावदातनिम्नगातटीकुटीरवासिनीकुटीस्फुटीभवत्कराकिटीश्वरीपटीयसी रसारसादिहोदि
तारसालसालसंवृतेवनेवनेषुदीक्षितामुदीक्षिताधिदेवता ८० कृ॰ सोयंहेयप्रत्यनीकोपिशार्ङ्गीकष्टंपृथ्वीकांक्षयाभूद्वराहः इ-
त्थंसिद्धब्रूहिमूलाभशोभात्ककंवेषंमानुषोनेहधत्ते ८१ वि॰ अनभिज्ञोभवान्भगवदवताररहस्यस्य शृणु पार्थिनीयंकामठंकै-
टभारिःकैटरूपंयातुकांठीरवंवा अन्यद्वायत्सर्वमप्राकृतंतन्नासौतेषस्पृश्यतिस्वस्वभावम् ८२ किंच श्रीकोलंमुविकोलंजगदा ३२

टी॰ १एतत्तटे २ निधिरूपा ३ शेषगरुडौ ४ मात्स्यं ५ वाराहं

लंबमेवैतुंस्वामीशुभकामीकिलभूमीमसुरार्तां वाराशिगभीरांभसिकाराभवनेभिग्रस्तामिहमुक्तामिवयस्तामुदहार्षीत्
८३ सभक्तिप्रकर्षयज्ञवाराहमभिध्यायन्नमामंत्र्य द्राघिष्ठकुहनावराहभगवन्दंष्ट्रात्मकंतेदृढस्तंभंसंप्रतिचिंतया-
मिजलधिस्नेहौघसंपूरितं यस्मिन्विंदतिदीपभाजनविधायामोदिनीमेदिनीचित्रंतत्रचरत्नसानुरयतेनिष्कंपदीपाकृ-
तिं ८४ इत्यन्यत्राभिक्रामन्मंदानिलस्पर्शसुखमभिनीयसानंदं कल्होरोत्पलतल्लजोल्लुलनवत्कल्लोलनिर्लोलन-
क्रीडापाटवगाढरूढहिमतासौरभ्यविभ्राजितः कावेरीसलिलावगाहरसिकः कस्यैषनेड्योमरुत्क्लांतानांमुहुरध्वनी-
नवपुषांयन्निर्धुनीतेश्रमं ८५ कावेरींनिरीक्ष्यसशिरःकंपं हंततरंगपुरसंगतमेत्राहंतरंगच्चलपंकजसंघं सत्यजा
यतझरंबहुमन्येसह्यजायततमःशमनार्थं ८६ एषाखलुदोषाकुलसकलमनुजकुलसकलकलुषशोषणबद्धकंकण
कंकणानिजतटनिबिडतमबकुलधवलकुलतिलकामलकाविरलसरलकुंदचंदनमंदारसहकारकरलकेसरसरलबदर
कदंबकदंबकगंभीरजंभीरजंबीरजंबुसंपूर्णपर्णकुसुमपलाशसमृद्धकपित्थलोध्रनीरंध्रशिलींध्रपाटलपटलजटिलक्रमु

टी॰ १ उद्धृतवान् २ पांथाः ३ अत्रअहमितिच्छेदः ४ सःहि अआयतेतिच्छेदः

विश्व० ३३ कप्रमुखविशंकटविटपिमंजरीपुंजसंजरीजृंभदुरुनरश्रमग्रामकरमकरंदरसग्रसनलालसर्थंपर्यटददभ्रविभ्रमालंबरोलंबनि
कुरंबकरंबितनयाकलिंदनंदिनीप्रतिछंदतामनुविंदती निशाकलितविशालसुरनदशाभवश्रमशालिक्षितीशालिनिशा
तकृशांगीजनमज्जनवेलाडोलायितपृथुलहारप्रत्युप्तमुक्ताफलरुचिनिचयपरिचयरंचितयाशुचितयापिपीतांबरपदांभो
रुहसंभवसरिदंबुडंबरं विडंबयंतीसततमंतर्गतचिरंतनपुरुषतल्पीभवदनंतफणामणिघृणिश्रेणिशोणीभूततयासरस्व
तीमनुकुर्वती पार्श्वद्वय्यामपि नैत्यमिककर्मानुष्ठानश्रद्धाबध्यासनशुद्धावनीसुरारब्धानवद्यब्रह्मयज्ञसमयसमेधितमंत्रब्रा
ह्मणाम्रेडनपूर्वकमजस्रसहस्रपत्रमध्यमध्यासीनानां श्रीरंगराजनाभिसरोजराजमाननिखिलनिगमपठनमुखरचतुर्मुखवैख मुस
रीं व्याचक्षणानां मदकरमरालयूनां वरटापरिरंभपरिचुंबनसुखानंगसंगरप्रक्षोभसमुत्फुल्लैरेरभिरामतामरसपरागैरभिनवचंदनरस
मसृणशरीरेव सलीलमाकंठनिमग्नमूर्तीनां सुगात्रीणां वदनैररदसीये पथसि विहाय साध्यासेन समागतश्चंद्रमाः सन्निहितश्रीरंग
धामा स्वसमाननामा विधुर्विरंचितानेकावतार इतीर्ष्यया स्वयमपि बहुनिरूपाणि दधानो विराजत इति भ्रांत्यासत्यामनुरागमाद्यसं ३३

टी० १ बहु २ हंसी

पादिकायामितरेतरदृढाश्लेषोन्मिषत्तोषाभिः कोकदंपतीपरंपराभिर्निराकृतायामकुंठोत्कंठेन युवलोकेनानिर्निमेषमवलोक्यमाने
रलंकृता सरस्वत्याभिमुख्येन कवेरात्मजेति प्रसिद्धिं सार्थयंती शांतनवास्पदतया गांगेयतरंगिणीति संज्ञामन्वर्थयंती समज्ज
नदुरितहरापि नमज्जनदुरितहरा निराकृतपथिकविश्रांतिः स्रवंतीयं कंदलयति चक्षुषोरमंदमानंदं प्रहसति भवशो
षकरीभवेन परितोषितां सुवर्णनदीं दुर्वर्णरुचिरफेनैः सह्यसुताजान्हवीमसह्यकृतां । ८७ पुनः सश्लाघं स्वर्णवंतं विदुः
शांतं रामां हेमापगामिमां दांपत्यमनयोरतदनुरूपं विशोभते ८८ कृ० साक्षेपं परिशोभितोभयपार्श्वामध्यमहि
१ तरंगैराजेनतःस्फुरिता कथमिव दधाति कीर्तिं कावेरी कनकनिम्नगेसेषां ८९ वि० आपातदूषणमिदं निरूप्य
माणे अस्या गुण एवस्यात् इयता वदेनां परमरमणीयां पीतांबरालंकृतमध्यभागा कल्हारमालाकमनीयवेणी
सह्याद्रिकन्याजनकस्य गेहात्पत्युः समीपं व्रजति प्रसन्ना ९० पुनर्निर्वर्ण्य उद्गच्छदच्छतमगुच्छलसच्छिरस्कास्ती
रद्रूपे पितरवः प्रतिभात्यमुष्याः एनां तरीतुमिह यत्नजुषः स्वशीर्षबद्धावदातवसनाः पथिकाद्रवामी ९१ किंचि

टी० १ कवेरात्मजा कन्येति श्लेषेण २ शोभनं तमर्णं वंसकवर्णयुक्तं च ३ आम्नाताम्रदृतिपदे ४ त्रपु ५ रूप्यं पक्षेन सिप्रस्रयोतं

दंतरमुपसृत्याधस्तादवलोक्यसहर्षं सारंगडिंभनयनानवकेलियोग्यनारंगसुरव्यतरुपुष्कलनिष्कुटेयं श्रीरंगदि
व्यनगरीप्रथतेनयाब्धिपारंगतैर्बुधजनैःपरिसेव्यमाना ९२ निपुणंविभाव्यसशिरःकंपं हंसानिष्कुटदीर्घिकावसतयः
प्रक्रांततर्काहवा लीलोद्यानचरःपतंजलिगिरापुंस्कोकिलःखेलति द्वैताद्वैतकथायथाविदधतिक्रीडाकुमाराद्गृहस्वे
रंतांत्रिककारिकाःपरिपठंत्येतासुहुःसारिकाः ९३ किंच प्रातःप्रातःपयसिविमलेपावनेसह्यपुत्र्याःस्नायंस्नायंस
कलविषयत्यागिनोयोगिनोमी वारंवारंभुजगशयनंलोचनाभ्यांपिबंतेक्षीमक्षेमाःक्षणवदखिलंकालमत्रक्षिपंति
९४ कृ॰ वयस्यविरुद्धमेवाभिभाषसे सारंगदृष्टीःकथमुत्सृजद्भ्यःसारंगदृष्टिःस्वदंतेमुनिभ्यः कवेरज्ञासंगति
मुक्तिसत्क्षोःकवेरज्ञासंगरुचिःकथंस्यात् ९५ विश्वा॰ सखेभवताभणितानांपदानांव्यासेनैवविरोधःसमाधेयइ
त्यग्रतःपश्यन्नंजलिंबध्वा श्रीरंगेशोभतेयस्यश्रीरंगेशोभतेन्वयः नमोहंकलयेत्तस्मिन्नमोहंकलयेततः ९६ किंच ३४
प्रणिपतिकर्मीकुर्मःफणिपतिभोगशायरथांगशय कारणमेकंजगतांवारणपतिभीतिवारणंज्योतिः ९७ कृ॰ किमस्मिन्न

टी॰ १ बहुलकल्याणाः २

ह्यभुजंगेकियंतेत्वयाप्रणामाः तथाहि श्यामोत्तुंगपयोधरोज्वलरुचिस्तन्वन्भुजंगान्वयंश्रीरंगेस्थलनित्यवासरसिकः-
शृंगारिणामग्रणीः प्राकारप्रकरांतरस्थितिमतीयारोजपद्मिन्यहोनिःशंकंपरपूरुषश्चिरमसौनिद्रातितत्संनिधौ ९८
वि॰ श्लेषावलंबनादोषानेमेरोषावहाः प्रत्युततोषावहाइतिनाहमत्रोत्तरयामि पुनर्निरूप्य क्षितिभृद्भिर्निजमौलिषु
धृतपादोविरहितापकारीन्च इंदुरिवरंगबंधुर्दोषाभावेविलोक्यतेकिंतु ९९ यद्वा नविधोश्शुभैरंगलक्ष्मितांगेसुमुदाप्या
यनकारिणीहृदृष्टे कलयामिकुरंगलक्ष्मितांगंकुमुदाप्यायनकारिणंविधुंतं ४०० पुनःसंचिंत्यसविस्मयं रंगेशासेव-
कायुक्तंनोर्तरीतिंभजेदिति चित्रमेतदसंगीतिव्यपदेशंयदश्नुते १ अन्यदद्भुतमुद्भुतमत्रश्रीरंगधामनि यच्चंद्राभिरव्य
याप्यैषाशोभतेपुष्करिण्यहो २ समंतादवलोक्यसश्लाघं रंगक्षेत्रमिदंरमेशितुरभिव्यक्तिस्थलेष्वादिमंतीर्थंसैवमरुद्वृ-
धाभगवतीयांतोष्ठवीतिश्रुतिः सर्वास्मानगरस्यचास्यजगतांनिर्वाहकोनायकोवासश्चेदिहलभ्यतेजगतिकोवैकुंठमुत्कंठते
३ कृ॰ सार्धांगीकारं सोयंयद्यपिहृद्यएवविषयःसायंतनेंदीवरश्यामांगेनसनायकःकृततमोभंगेनरंगेंदुना भ्रांताः

टी॰ १ विटसर्पौ २ रंगस्थलंक्षेत्रंच ३ चद्रनृपौ ४ राजापर्वतश्च ५ किरणाश्चरणाश्च ६ रंगसंज्ञकेविष्णौ ७ कृरंगमित्यर्थः ८ प्रसिद्धचंद्रं ९ नृत्यरीतिं आर्तरीतिंच १० संगी-
-त्यभाकःसंगरहितश्च.

किंतुन्वरतिहंतपिशुनाःशांतात्मनांतापदाःश्रीमंतोयदुदंचनाद्भुतनरवल्त्वत्रासमत्रासते ४ किंबहुना नित्यंकांचनसिंधुम
ध्यरुचिरोनिष्कंपसंपन्निधिर्निस्तुल्यामपिकांचनश्रियमुरोमध्येदधानःस्वयं विभ्यल्किंपिशुनेभ्यएषबहुलप्राकारसंवेष्टिते
शेतेधामनिरंगनायकइतिस्वाख्यामिहख्यापयन् ५ वि० सर्वेनजातुश्रीमतांहानिः प्रत्युतनेदृदृणांपिशुनानामेवभ
वत्यनर्थाः परवित्तजिहीर्षयाप्रवृत्तःपिशुनस्तःस्वयमेवनाशमेति सुलभःशलभस्यकिंनदाहःपृथुदीपग्रसनायजृंभितस्य ६
अलमन्यप्रसंगेननतमेवन्चरंगेशंश्रीरंगधामानमनुसंदधामि सविस्मयं सपर्याविरुध्यादपिप्राप्तुमीष्टेसमर्थोजगत्यांयतो
रामन्चंद्रात् अरंगाधिराजोदितप्रौढभक्तेरपिप्रापपूजांसरंगाधिराजः ७ अथवानात्रविरोधइतिसमर्थयति कुवस्त-
हानात्सद्धस्तसंयहीराघवःक्षमं हंताकुरंगराजस्यरंगराजमपूजयत् ८ पुनःसभक्तिप्रकर्षंभगवंतमुद्दिश्य श्रुतस्फुर
न्नुतिघोषेशत्रुपुस्फीतरोषेनिहतविनतदोषेनित्यदास्याभिलाषे ललितवपुषिशेषेलब्धसंपूर्णतोषेपरमपुरुषशेषेपर्वन्चंद्रा
विशेष ९ भगवन्रंगनायकभवदीयेसदसिभाषितुमपिवयंबिभीमः तथाहि कर्तृव्याकरणस्यवाममितरद्यस्यप्रव

क्लीक्ष्णंभाष्यंव्याकरणस्यसाधुविदधेशाख्यायदीयापुनः यद्वाहोद्विजशेखरःश्रुतिमयोयस्यश्रुषाभारतीगोष्ठ्यां त्रस्यति
तस्यनेकविजनोरंगेशकर्तुंस्तुतिं १० पुनरंजलिबध्वासप्रार्थनं वरगुणगणसीमावारिदश्यामधामासततममररामासं
घसंगीतनामा परिहृतभवदाभाभासिताकल्पहेमाममकलयतुभूमामंगलंरंगधामा ११ अन्यतोवीक्ष्यसश्लाघं
स्वामिनींस्तोमिनीलाश्रमदमोन्चनलोन्चनां अंगनांरंगनाथस्यदीप्तिंमूर्तिमतीमिव १२ देवीमुद्दिश्य मोहोन्मूलनमू-
लिकाभवजुषांमोक्षाध्वनिःश्रेणिकान्चेतःशुद्धिविधानसिद्धगुलिकाचिंतातमश्चंद्रिका विद्याविभ्रमसारिकासिकमले
विष्णोरुरोमालिकामानस्त्वंममपारिजातलतिकामोदांबुधेर्वीचिका १३ क्र० कांत्येवहंतहत्यापिकमलामपिन्चेला
अत्रिष्टेष्वेवरज्जंतीमभिष्टोतिकथंबुधः १४ तथाहि प्राक्पर्यंकमधिष्ठितोपिमृदुलंपालाशशाख्यामपिप्रायःप्रा
र्थयतेकदन्नमिवयःक्षीरोदनंभुक्तवान् प्राश्नात्येषकंदुष्पिकाम मृतवत्प्रागात्तपीतांबरःकंथांयान्चतिभृत्यतिक्षि-
तिपतिर्लक्ष्मीकटाक्षात्यये १५ दातुर्द्वारियएषवारणमगात्तद्वार्यहोवारणंपश्याम्यद्यन्चिरादशेतभुवियोभूत्तस्यशे
टी०सभा २स्थिलास्वभावेनन्च ३विद्युतंन्चपलांन्च ४दुर्यवागूः ५भत्यवदान्चरति

वि० तेभुजे नाह्यारानपिलेभिरेयदबलाहारानमूस्तस्त्रियाविंदंतेकमलादृग्र्मिभिरहोनिम्नभवत्फन्नतिः १६ इदंचबो गु०द०
२६ ध्यं श्रियमुद्दिश्य हंतुर्बंधुजनान्धनार्थमनघान्गंतुःपुरस्त्रीशतंरंतुर्जंतुविहिंसकेःसहजनैःसंतुष्यतोवंचनैः वक्तु
स्तीक्ष्णमयुक्तमेववचनंपक्तुर्मितंचौदननित्यंनृत्यसिमंदिरेषुकमलेऽकृत्यंतवैतन्मतं १७ अन्यच्च एषामन्यकल
त्रदर्शनकलाव्युत्पत्तिशून्यदृशोमूढंहृच्चपरार्थचिंतनविधौमिथ्यानभिज्ञंमुखं अप्रज्ञातपशून्बुभुक्षितशिशूनुअ
च्चोदकैस्ताम्यतस्तेषांलक्ष्मि गृहान्दृशाचभयभीतेवेहनावीक्ष्यसे १८ विश्वा० सखेवमनसःखेदंजननीतवेयं
वाणी यतोदुःशीलेषुदृश्यमानाःसाधुजनानुपयुक्ताःसंपदाभासाःप्रत्यक्तमृत्युत्तरणकारणभुवनजननीतवेयंवा
णी यतोदुःशीलेषुदृश्यमानाःसाधुजनानुपयुक्ताःसंपदाभासाःप्रत्यक्तमृत्युतरणकारणभुवनजननी रूपाकटाक्षवै
धुर्यनिबंधनाएव उक्तंहि गुणहानेरुदधिदुहितृवैमुख्यनिबंधनत्वमुन्नितज्ञेनकेनचिद्विदुषा सद्योवैगुण्यमायां
तिशीलाद्याःसकलागुणाः पराङ्मुखीजगद्धात्रीयस्यत्वंविष्णुवल्लभेति १९ ततश्च संपत्तिःकिंपचानानांसंभ्रा २६
टी० १रूपणाः

साकोपथेनया नरकानुभवोदर्कोनसालक्ष्मीरूपाफलं २० तथाहि धन्यंमन्यनयातृणीकृतबुधाधर्मेषुदुर्मेधसःसेर्ष्यास्तामसपु
ण्यलेशविलसत्संपल्लवाःपल्लवाः पश्यासूनपहायपंचैषदिनान्याकल्पकल्पाइमेभोक्ष्यंतेबतयातनाबहुविधाःकार्तान्तगर्तान्तरे २१
यच्चभणितंभवतातत्रभवतःशिष्टान्लक्ष्मीर्नवीक्षतइतितदज्ञानोपबृंहितमेव यतःसाधुजनेभ्योमुक्त्यैश्वर्यपर्यंतनिरंतरभगवद्भ
क्तिसंपदंप्रदत्तेदूरापास्तमारामयविकारावाराशिदुहितुरुदारकटाक्षसुधाधारा संभोगारंभजृंभन्मदकितवपरीरंभसंपीड्यमानप्रौढ
स्त्रीरत्नहारप्रशिथिलगुणवद्वृगुराःसंपदोघाः साधूनामास्मभूवन्स्मरपुरनिरयीकारदक्षोहिलोकेभोक्ष्यंतेमोक्षमंतेस्थिरनिरवधिका
नंदधारात्मकंते २२ किंच लक्ष्मीकटाक्षपूरःसजयतियदुपचयतारतम्येन नरसुरपशुप्रजानांपतयःस्युर्हंतजंतवःकेपि २३
रू० कमलाकटाक्षानिशयोविभवोपचयहेतुरितिनोपपद्यते यतस्तदल्पीयस्त्वमेवसंपदुत्कर्षसंपादकं तथाहि गजशिबिकातुरग
स्युर्नरस्यतन्व्यादृशाहरेस्तन्व्याः नद्धन्निभवतिवाहोनीरदउक्षाचहंतपक्षीच २४ वि० विहस्य ईदृशीमुत्कर्षपिशुनामरविंदालया
मभिनंदामि किंदर्पदायकधनोपचयेप्रमत्तैःकंदर्पसायकहतैःक्षितिपैरिहेति संतःपुरंदरनुतंत्वरविंदनाभेरंतःपुरंतदवनावनुचिं
टी० अन्योयेन २ औकलिकं ३ पंचषड्वायानि ४ रूनांतीयमस्त्यये

वि० नयंति २५ पुनरनुध्यायसांजलिबंधं मातस्तेमधुसूदनप्रणयिनिप्रातःसरोजछदासुधीमुषिविचक्षणेशुभगुणेदर्शनमस्कुर्महे अष्टाभिः कि गुन्द०
३७ लदृष्टिभिश्चनिस्पृभिर्जुष्टाःसहस्रेणवादेवाह्यादशभिश्चयद्विषयतामिवार्थयंतेक्षणं २६ इत्यन्यतोवीक्ष्यसानंदं उग्ररिपुनिग्रहपविग्रहदिवो
कश्चक्रवृतनशक्रमदविक्रमनिहंता मोदरसमादरसमेतइहपूर्णःप्रक्षिपतुपक्षिपतिरक्षियुगुलेमे २७ कृ० किंवर्णयसिसुपर्णममुमतिक्रांत
मर्यादं तथाहि अधिगतनिगमांगोपिद्विजराजोप्यच्युतंदधानोपि निजगारकथंकारंनिःशंकंभिल्लपल्लिकांगरुडः २८ वि० पक्षिरा
जस्यभिल्लपल्लिकानिगरणेनसाधुजनानुग्रहासाधुजननिग्रहसामर्थ्यसदसद्विवेचनचातुर्यंचव्यंजितमेतत्कथंभूषणमेवदूषयसि शृणु
गरुडोगिलन्किमपिकिल्बिषाविलंखलभिल्लजालमुषितंतदंतरे निरजीगलन्निजगलादिलासुरंभवतःपन्नमिवपन्नगेशयः २९ हंत प्र
शकुंतपुरंदरस्यास्यस्वच्छंदविहारावसरेष्वप्यभंगुरमेवस्वामिकैंकर्यं यतः स्वज्येष्ठप्रेर्यहर्याश्रितरथघृणिमन्मंडलस्थान्च्युताप्यंसन्मार्गं
पक्षवातोद्धूतधरणिरजश्छन्नमेनज्जवेन कल्लोलैरुल्लसद्भिःप्रचलजलनिधेःक्षालयन्पूर्णदर्णःप्रेंखड्डिंडीरखंडच्छलकुसुमकुलैर्मंडयत्यं
डजेंद्रः ३० पुनरभिध्यायन् यद्दीक्षाधैर्यरक्षांकिलपुलकभृतांयाचतांदेवतानांसेवासंमर्दकालेगिरिशफणिगणाद्बिभ्यतामभ्यतानीत् ३७

सोयंगांगेयपृथ्वीधरवरशिखरच्छायदायादकायश्छिंदन्वृंदंरिपूणांकलयतुकुशलंच्छंदसोनःशकुंतः ३१ पुनःसविस्मयं नगेरूपमुपे
तियुक्तमंगीकृतशौरेर्वापिसुपर्णउन्नतोपिविनतेर्कैविधेयएषचित्रंस्थिरमामोदमगान्मधौर्विपक्षात् ३२ अथसर्वतःपुरींनिरीक्ष्यसांज
लिबंधं श्रीवल्लभदासेभ्यःश्रीरंगक्षेत्रनित्यवासेभ्यः त्रुटितभवत्रासेभ्यःनमोस्तुकृतशिष्यधीविकासेभ्यः ३३ कृ० सखेसर्वानेतत्पु
रवास्तव्यान्मास्मभवान्नमस्कार्षीत् निबिरीसगुणस्तोमैर्हरिदासैरलंकृते अट्टशूलाःकतिपयेपट्टनेस्मिन्प्रतिष्ठिताः ३४ निरूप्यस
विस्मयं शक्राद्यर्थ्यहविरघहरंशौरिणास्वादितंयन्दत्तंवित्तग्रहणचपलाःकेपिविक्रीणतेतत् धामश्रीमद्यदिमधुजिताध्रीयतेस्वीय
मितेनत्रस्यंतेधनकणतृषास्तच्चविक्रेतुमज्ञाः ३५ वि० मंदमतेमैवं किंकिंनजीर्यतिमुकुंदपदारविंदद्वंद्वाभिवंदनकृतामिहदेहभाजां
अत्यद्भुतौषधविशेषनिषेवकाणामापादयेतकि मनर्थमपथ्यसेवा ३६ समंतात्पुरींनिरीक्ष्यसश्लाघं रंगादन्यदनंगारेःकंसा
रेर्वास्थलेष्वहो किंदृष्टंकिमपिक्षेत्रंससप्राकारवेष्टितं ३७ कृ० वयस्यमैवंवोचः अभ्यर्णेस्यपुरस्यैतदधिसह्यात्मजा
तटं शैवक्षेत्रमवेक्षेथाःससप्राकारसंवृतं ३८ वि० विहस्यसत्यं जटाधरप्राकारसंवृतस्यास्यश्लेषेनैपुण्येनैवरंगसा
टी० १ रक्षरुत्वं २ येदशाखाःशिखाश्च ३ दलानिपक्षाश्च ४ नम्राः ५ वसंतदैत्यौ ६ पक्वान्नक्रयस्थानानि ७ प्राभिर्जटाभिःसहितःशंकरस्तस्यप्राकारः

धर्म्यंसमर्थनीयंनिपुणंनिरूप्य नंदत्कंदर्पदर्पक्षपणनिपुणदृग्वन्हिसंपर्कभालारुण्यःफण्याग्रगण्यप्रकरमयतयाभीषणैर्भूषणैर्यः
कांतःसांतःपुरःसन्कवलितगरलोराजतेराजतेंद्रौमह्यांसह्यात्मजाग्रेविहरतिसकचिरंशंकरःशंखरोचिः ३९ कृ॰ सखेनात्रस्थातव्यं
यदीहविश्वविलक्षणारीतिरालक्ष्यते पश्य येतोयैर्नादेयैरभिषिक्तास्तेहितापमुज्झंति प्रत्युतजहातितापंकावेरीशंकराभिषिकेण
४० वि॰ कुतएवं कृ॰ शृणुतावत् गंगानुषंगाद्यमुनासदृग्र्येत्यसह्यतापावनसह्यकन्या गंगाधरेस्वैरभिषिच्यमानेतोयैःस्वयंताप
मियंजहाति ४१ वि॰ ईदृशंदूषणंगुणग्राहिणामभिमतमेवेतिअन्यतोविमानंप्रस्थाप्यसानंदं अमीखलु व्यालाधिपेशायशुभस्थ
लभूषितलाःस्वेलाशनायतनसांद्रलतांतरालाः चोलाविभांतिपवमानविहारवेलाडोलायमानसहकारनवप्रवालाः ४२ निपुणंविभा
व्यसोत्कंठं नागवल्लीमतल्लीभिःक्रमुकीभिरिवादरात् परिरब्धाःप्रमोदंतेक्रमुकाःकामुकाइव ४३ इतश्चभवानवेक्ष्यतां अ
भ्रंलिहानहहपश्यमरुद्दुधायारोधोरुहःपृथुफलानिहनारिकेलान् आगच्छतेसवितृमंडलमाश्रितायदेवायभक्तिनइवात्तनवोपहा
रान् ४४ कृ॰ ममत्वेवंमतिः लोलद्दीर्घदलाबृहत्तरफलावातोल्लुलद्धूलिभिश्छन्नाःप्रांशुतमाःस्फुरंतिपुरतोयेनारिकेलद्रुमाः

टीप १ कावेरी



धूमास्वादनपात्रधारिणइमेद्राघिष्ठचंचज्जटाभस्मोद्धूलितमूर्तयोविवसनाःपाखंडिभेदाइव ४५ वि॰ सहासमन्यतोनिर्दिश्य
पद्मिन्याकर्षोत्थितगंधप्रसवान्प्रपश्यपुन्नागान् अतनूयाशुगकरुनासंप्राप्तानधिकरेणुसंपर्कम् ४६ पार्श्वतोवीक्ष्य
अहोमहोन्नताजनपदानाममीषामभिजातता पश्य ज्योतिष्टोमस्तोमउकथ्यातिरात्राप्तोर्यामःषोडशीवाजपेयः प्रौढायज्ञाःपौंड
रीकादयोयेचोलेष्वेतेनित्यमोपासनंति ४७ पश्य गृहेगृहेपश्यकृताग्निहोत्राःशास्त्रौषधोल्लाघहृदोविदोषाः पुण्योत्तराःपंडि
तपुंडरीकाःपुनंतिवेदैकधनाजगंति ४८ कृ॰ एतद्विषयविषयाश्लाघाशाखानुशोखंनकर्तव्या यतएतद्देशेवसतांसतामप्यनेक
प्रकाराः दुराचाराउपलभ्यंते स्नांतिप्रातरधिस्रवंतिविधिवत्संध्यादिकर्माचरंत्यग्नीनादधतेमखान्विदधतेशास्त्राणिचाधीयते
अभ्यर्चंतिसुरान्पराघ्यकुसुमैरर्चंतिकिंचातिथीनन्नैःकिंतुपुरातनैस्तनुममीपुष्यंतिदुष्यंत्यतः ४९ पुनर्निरूप्यसविस्मयं कष्टमे
तद्देशवासिनीनांविलासीनीनांलज्जाव्युत्पन्निराह्रियं तथाहि अपिहंतचोलवांसस्थैर्यवतीनांचिरापयुवतीनां अपकंचुलिका
बंधौकुचकुंभावितिविरुद्धमुपलब्धं ५० किंच अगूढगाढस्तनकुंभिकुंभमंभोजदंभोदयजैत्रनेत्रं चित्तेनिधत्तेबतचोलदेशा

टी॰ १ अतनोःकामस्यबाणाःपक्षेअतनुर्महान्यावायुः २ पल्लवितेत्यर्थः ३ नद्यां ४ वस्त्रंवसनिश्च

स्त्रैणंप्रवीणंरतिकांतबाणं ५१ अपिच नवार्नवमहोत्सवेनतुसहस्रशःसंगतागृहाद्बहिरशक्तिंगदिनकामगाथाशताः अहार्यक
ठिणस्तनप्रकटनादनागस्विनोमुनेरपिचनांधृतिंचुलुकयंतिचोलांगनाः ५२ वि॰ वयस्यमास्मनिंदचोलमंडलवासिनोजनान्
याभिःसर्वपदार्थशःक्षिरुदितातास्वप्नदेवार्पितंनिक्षिप्तंनिशिरक्षितंशःचिह्वविर्भक्ष्येतचेत्काक्षतिः त्याज्यंशास्त्रनिषेधतस्तदितिचे
त्साज्यंसत्तैलंचतद्वाज्यंपर्युषितंस्मरंतियदतोयोज्यंनतदूषणेः ५३ पातिव्रत्यमुपेत्यनित्यमनघाचारावदातात्मनांचोलीनांयदिकंचु
कीनकुचयोर्मालीमसीकाननः नारीणांस्फुरतोपयोग्यवयवस्पष्टीकृतिर्दोषइत्युक्तंचेदधरापिधानमपिकिंनस्यात्सदावाससा ५४
पार्श्वतोवलोक्यसश्लाघं अस्यदेवस्यभाग्यवत्तारवल्वियत्तापरित्यक्ता यतोत्र मणिमयफणितल्पमल्लिकापुंजकल्पशमितजगद
भद्रांसंश्रयन्योगनिद्रां दहरकुहरवर्तीदेवताचक्रवर्तीदलितदुरितबाणेदृश्यतेकुंभकोणे ५५ अंतर्नागरिकींजनतामवेक्ष्यसशिरः
कंपं स्नात्वासह्यसुताजलेशःचितमाभूत्वाजपादिक्रमेर्हुत्वाग्नैचहविःकृतेतरगिरांकृत्वाचपारायणं नत्वाशार्ङ्गधरंभवामयहरंस्तुत्वा
चतंभक्तितःश्रेष्ठाःकालममीक्षिपंतिबहवःश्रीकुंभकोणेद्विजाः ५६ इतश्च कुटीषुगोपीरुचिरासुयोर्कभूतटीषुगोपालइतिश्रुतोच ३९
टी॰१स्त्रीसमुदायः २अगस्त्यः ३प्रसन्निमितामिवस्वल्पांकुर्वंति ४आकाश ५वेदानां ६यमुना

रत् अकंपकारुण्यमुपेत्यमोदतेसच्चंपकारण्यमगण्यवैभवः ५७ अत्रकिलराजगोपालपादकमलमुपाश्रयतःसाधुजन-
स्येत्थमनुसंधानं कोपाटोपदशाविशालपरुषालापादिरूपाशःभव्यापारग्लपितार्थिलोकहृदयैर्भूपालपाशैरलं तापावि
ष्टसकृत्प्रपन्नजनमुक्त्यापादनेदीक्षितंपापानामपनोदनायकुहनागोपालमेवाश्रये ५८ कृ॰ अत्रापिममविरोधएवप्रतिभा
ति यतः न्यस्तपादःस्मनसांशीर्षेषुमधुहार्यहो सुरारातिर्द्विरेफोपिचंपकारण्यमाश्रितः ५९ वि॰ विरुद्धनामपिस
हावस्थितिसंपादकेदेवेवास्तदेवकानामविरोधकथा यस्मिन्विलोचनतयासहपुष्पवंतोपर्यंकवाहनतयाफणिपक्षिराजो
तिजस्विनोप्रमुदितोस्थितिमाश्रयेतेतस्मिन्नहोभगवतिक्वविरोधगंधः ६० इतिपरिक्रम्यावलोक्यप्रांजलिः परिगतसहकारैः
प्रांशःभिर्नारिकेलैर्दिनकरकरधारादुष्प्रवेशांतरेभ्यः चुलकितदुरितेभ्यश्चोलदेशस्थितेभ्योनमइदमखिलेभ्योनाथदिव्यस्थ
लेभ्यः ६१ कृ॰ भवतुतवैतेपुनमस्कर्तृता ममतुदेवलकादिदेवालयोपजीविदुराचारानालोकयतोनभवतिनमश्चिकीर्षा
तथाहि वारस्त्रीकुचमर्दिभिर्विरचयंत्यर्घ्यादिदानंकरैस्तद्वीटीरसवासितैश्चवदनैर्जल्पंतिमंत्रानमी द्रव्यंदेवलकाहरंत्यचकि
टी॰१दूराजभिः २दैत्यःमकरंदश्च ३सूर्यचंद्रौ ३अत्रचौर्यपरैः

तादेवस्यतत्पूजितास्वेताःकृप्रतिमास्फुहंतभविताकिंदेवतासंन्निधिः ६२ किंच आघ्रानाबतपुण्ययैोबतकचानोकर्मसंध्या
दिकंयैरभ्यस्तमभूदसभ्यवचनंनत्वेववेदाक्षरं अंधश्वोर्यपरैर्दुरन्वयभवैः सूदैरमीभिःकृतान्यन्नोघानिनिवेदितानिभगवा
नंगीकरोत्येषकिं ६३ विमृश्य अहोकलिमहात्म्यादखिलजनानामनिवार्योविवेकविपर्ययः सद्यस्वादरनोर्पितानिहरये-
सत्वोत्तैरभूसंस्कृतैरन्नान्यत्रनमानयंतिविधिवत्सिद्धानिवृद्धाअपि देवस्यायतनेस्वदंतिविभयाव्रात्यैःकृतानोदनान्स्पृष्टान्दुष्ट
जनेनकष्टमखिलैर्दृष्टानशिष्टाहतान् ६४ वि॰ मादृशेभ्योहिदिव्यक्षेत्रमहात्म्यवेदिभ्योभवदीयमत्रदूषणंनरोचते पुनः
उपस्थवस्त्रानादुचितशुचिताशालिवपुषोविनीताःस्वेशास्त्रेविगततृष्णाःपूजकजनाः परित्रातुंलोकान्विधिवदपतंद्रा
नविदधतेपवित्रैरन्नाद्यैःपरमपुरुषाराधनममी ६५ आकर्ण्यतामिदमपियदभ्युपगम्याप्यभिधास्यामिरहस्यं विधि
वदविधिवद्वाभक्तितोभक्तितोवानतुरंकृचिरशुचिर्वानाथमर्चत्विहत्याः अनुदिनमुपयातैरर्च्यमानाःकृदेवैररुचिरजिनमूर्ति
र्घ्वास्तिकस्यास्तिकस्य ६६ इदंचावधेयं केचिच्चक्रधरापराधचकिताःक्ष्मापालभीताःपरेश्रद्धानःकतिचित्सर्वस्य

टी॰ १ पाककर्त्तारः २ सात्विकगुणवद्भिः ३ संस्कारहीनः ४ विष्णुः



वहितास्तृष्णाश्चदिव्यंहविः अग्रेन्यस्तमिदंमुदैवभगवानालोकनैःस्वीकरोत्यंहःसंहरणास्थयात्वतदिदंप्राश्नंतिभाग्यैौत्तराः ६७ पश्य
तावत्स्वानुभवसिद्धोप्रकर्षनिकर्षौभगवदायतनतदितरस्थलपरिकल्पितयोरन्नयोः उपस्कारैःस्फारैरुपचितरसामोदभरमप्यवैष्णवैस्तन्नैग
हेकृतमननिभोग्यंबुधजनः अभूयःसंस्कारिण्यपिहविषिदेवालयभवेत्वनल्पंभोग्यत्वंपुनरघहरत्वंचमनुते ६८ इदंत्ववधेयं दे-
वागारनिवेशिनःकिलजनादुष्यंतुशुष्यंतुवातेमीस्वामिपरिग्रहेणनियतंमान्यामनीषाजुषां प्रायेणाश्रयगौरवेणलभतेहीनोपिमाना
र्हत्वांकुटुंबःक्लीबमुखोजनोपिभजतेपूजांहिराजाश्रयात् ६९ इत्यन्यतःपरिक्रामन्नग्रतोवलोक्यसहर्षसांजलिबंधं पातुंपातकिनो
जनान्शरणान्पातुंस्तमःसागरंयातुंयातुपुरीमरीन्रणसुरेवजेतुंदशास्यादिकान् नेतुंभूतनयांमुदंविरहिणीमेतुंयशःशाश्वतंदातुं
शर्मन्वराघवेणरचितंसेतुंनमस्कुर्महे ७०-हंतकठिनानामप्यनुबंधिजनेप्रीतिरतिमहती यतः लंकापुरेपंक्तिमुखेवनरुद्धांभूमीसृतां
भूमिभृतोनुबंधात् पतिंपुनःप्रापयितुंपयोधौसेतूभवंतःस्वयमाप्लुवंति ७१ निरूप्य पयोधिमध्येप्लवमानमूर्तयस्तरंगवेगार्पि
तफेनचिन्हिताः हसंतिकिंमंदरमंतरर्णवंनिमग्नमेतेनलसेतुभूधराः ७२ पुनर्विमृश्य लंकापुरावासिरघूद्वहारिसंपर्कपापा

टी॰ १ भाग्यशालिनः २ बहुभिः ३ मन्यते

दिवसिंधुराजः सपक्षभूभृन्निबिडांतरोपिविपक्षभूभृद्भिरबंधिकष्टं ७३ शुभ्राःसंश्रितधर्मसेतवइमेसोढोग्रवर्षातपाःस्थित्वासिं
धुजलेसदाक्षितिभृतोघोरंतपःकुर्वते नृत्यंतीरिहनित्यमेवलुलितास्तीक्ष्णैरतन्वीशरैर्गेलीवण्यंदधतीःकदापिनचलंत्यालोक्यवीचीं
रमूः ७४ क्षणमभिध्यायन्नंजलिंबध्वा अस्ताकदशितिरपिवारिधिरेषयस्मात्रस्तोबिभर्तिविपुलोपलसांद्रसेतुं गोपायतेदुरित
वंतिजगंतितस्मैकोपायतेरघुपतेमहतेनमोस्तु ७५ कृशा॰ साक्षेपं काकुत्स्थकोपचकितःकमितानदीनामासीद्यदानघगुरु
प्लवनार्हतोयः शक्यस्तदैषतरितुंहरिभिःपदाभ्यांकिंवाफलंकथयसेतुकृतिश्रमस्य ७६ वि॰ तत्कथितमेवमयाभवतातुनसम्यग
वधारितं श्रृणुतर्हिपुनःसावधानं अंभोराशिंवानरालंघयंत्वित्येनद्व्याजीकृत्यराजीवनेत्रः अंहोराशेर्लंघनार्थंनराणामंभोराशौसेतु
मुच्चैरबध्नात् ७७ पुनर्निरूप्य नसागरोसौनभएवफेनव्रजानचामीविपुलोडुवर्गाः नसेतुरेषोपिनिशाचराणांनृपातकानामपि
धूमकेतुः ७८ पश्यात्रजलचरभ्रमचमत्कारं गजेंद्रबुध्यानलसेतुशैलान्ग्राहाग्रसंतेजलधौवसंतः तद्भासजायासससमुत्पदंष्ट्रा-
न्योधाःप्रधावंतियथागतंते ७९ पुनर्विचिंत्य डिंडीरखंडान्वयपांडुराभंद्राघिष्टमुच्चैःपरिणीहवंतं काकुत्स्थसेतुंकलयेगुणाढ्यं-

टी॰ १ पक्षरहिताःशत्रवश्च २ कामबाणैःबहुभिर्वायुभिः ३ सौंदर्यंक्षारत्वं ४ विशालता

धौतोत्तरीयंधृतमर्णवेन ८० यद्वा चिराश्वराभूरिभरार्तमूर्तिर्हरित्करिष्वर्पितनेजकृत्यः श्रमक्षयायार्णववारिशीतेशेतेस
किंसेतुमिषेणशेषः ८१ विसृज्यसश्लाघं यःपुरापोपदेशाकृच्छेदसाधनतांगतः ससेतुर्नकथंशक्तःपापपंचकभंजने ८२
इतिपरावृत्यान्यतोवलोक्यसामोदं नापंविलुंपतिनृणामिहताम्रपर्णीत्याख्यांवहन्नघदवानलजृंभणोत्थां पाथोनिधेस्त्रिजगति
थितोवरोधोरोधोल्लसत्परमहर्षमहर्षियूथः ८३ तदभ्यर्णेनिर्वर्ण्य चकास्तिकुरुकापुरीशुचिनिताम्रपर्णीतटेविरक्तपरिपक्त्रिमत्रि
युगभक्तिभिर्वैष्णवैः दृढव्रतशठार्युरौबकुलसंपतद्भ्रमरध्वनिद्विगुणजृंभणद्रविडवेदघोषोज्वला ८४ अत्रत्यानांहरिभृत्याना
मित्यनुसंधानं परिदृश्यवंतसहस्रशाखांपरमांद्राविडसंहितांहितांनः गुरवेकरवामनित्यमस्मैशठकोपायमहर्षयेप्रणामान् ८५
अंचामचिंचातरुमद्भुतंतंपंचामरद्रूनवधीरयंतं शठारिसंज्ञंकिलयस्यमूलेतपःफलंकिंचिदुदंचितंनः ८६ दिशांनृश्रिताना
ममृतात्मकंफलंविलक्षणोभातिसनिंतिणीतरुः सहस्रशाखंद्रविडागमंसृजन्सयस्यमूलंसमुपाश्रितोमुनिः ८७ हरिमिव
कृतवितरणंबकुलाभरणंवृणीमहेशरणं ध्येयंयंविदुरार्यामुमुक्षुभिर्यत्प्रबंधमध्येयं ८८ तस्मिन्मतिर्मेस्तुदृढाशठारौगायंत

टी॰ १ पापोयोदशकादशमूर्धारावणःपंचमहापातकानित्वल्यानिपंच २ अत्वारितिर्नहरीतिनदेशप्रसिद्धिः ३ विष्णुः ४ धिकुर्वंतं

उच्चैरिहयस्यगाथाः प्रह्वायदेहंप्रथयंतिदिव्येपदेहमन्नादइतिप्रगीतं ८९ कृतदुरितनिरोधानांकलितश्रुतिमौलिभावबोधानां
वशितरमानाथानांनकृथापिसमाशठारिगाथानां ९० कठिनशठनरेंद्रस्तावकानूश्लोकपाशानूजठरपिठरपूर्त्यैजातुमासंग
दिष्टाः लुठितदृढतमस्कैमान्वसंसारकूपेपठनशठजिदुक्तीरश्रमानीतमुक्तीः ९१ कृशानुमामंत्र्य ननुशठकोपायत्वंप्रण
तिंप्राप्तायभावुकोपायत्वं विमलमंतुकुरुकायान्निरसितुमंहोविराजतेकुरुकायां ९२ किंच बकुलाभरणीयानांगाथानांस
न्मुरवेनभरणीयानां हरिगृहमध्येतारस्वरेणपुनतेप्रपंचमध्येतारः ९३ सश्लाघं विरक्तैरास्थानामधुमथनभक्तैर्नटनभूर्विमु
क्तेर्निश्रेणीसुकृतपरिपक्तेःफलमसौ प्रपत्तेरुद्यानक्षितिरकृतकोक्तेःप्रियसखीचिदंकूरक्षोणीबकुलधरवाणीविजयते ९४
समंतादवलोक्यसानंदं कृशानुमुद्दिश्य अभ्यस्तवेदमौलिभ्यःसम्यस्तत्वबुभुत्सया कुरुकापुरवासिभ्यःकुरुकामंनमस्क्रियां
९५ कृ॰ सत्यमेवं तथापिपुनरपिपतितश्रुतिस्मृतयोयतयोपिकतिचिदत्रवर्तंतइतिनभातीहमाननीयता तथाहि न
संध्यास्नानंतिसृषुनकमंडलुरपिधृतिर्नचातुर्मास्यादिव्रतमपिनभिक्षाटनविधिः नलिप्सायास्त्यागोनपरिपठनंचोप ४२
टी॰ १ एतन्नामकतुर्या २ उच्चस्वरेण ३ राजधानी ४ रंगभूमिः ५ अतिक्रांतश्रुतिस्मृतयः

निषदांयतिसंतन्नैषांश्रुतिमतमतिक्रम्यचरतां ९६ नकेवलमेतावदेवशृणुतावदन्यदपि सन्यासाश्रममाश्रितोपिसकलव्यापार
लोपात्मकंकैंकर्यंचपलोहरेरपदिशन्द्रागराजधानींविशन् अर्थानर्जयतिश्रितोर्जितमठोमृष्टान्नमश्नात्यसौकोमृष्येदिहराम
रामनतदिदंकष्टंकलेश्चेष्टितं ९७ किंबहुना अन्याय्यमस्तिकिमितोपिहृतेकलौयत्सन्यासिनोविदधतेगृहिणांप्रणामान् ए
तन्नुचेतइहकृतंतनिवैष्णवोसाविस्यत्रशूद्रममतिर्नमतिद्विजोयत् ९८ वि॰ सखेमैवंभाषिष्ठाः इच्छंतुहंतयतिनःकतिचित्सनैं
घमुक्ष्नुभैक्ष्यचरणंकलयंतुमावा हर्यंघ्रिपंकरुहकिंकरतारताश्चेदंकप्रसक्तिरकलंकहृदांकृतेषां ९९ यत्पुनरभिहितं
फणिवरपर्यंककैंकर्यार्थपर्यटनमपितुर्याश्रमाननुगुणमितितदपिनिपुणनिरूपणविरहविजृंभितं केचनपंकजलोचन
कैंकर्यायेवपर्यटंत्यंते सन्यासिनइहधन्यास्तेहिस्वतउपगतस्पृहाविरहाः १०० इत्थंहिहेयोपादेयविदउदाहरंति भोगायै
वनितंबिनीपरिणयोयागाहृतिःख्यातये स्वार्थेपाककृतिःकुपात्रविषयेत्यागार्थमर्थार्जनं स्वाध्यायाध्ययनंप्रतिग्रहकृतेवादाय
शास्त्रश्रमोदुष्येत्स्वोदरपूर्तयेयदिहरेःकैंकर्यमाचर्यते १ अन्यच्च भूयोदोषैरपिपरिवृतःपूरुषःसात्विकानांप्रायःपूज्योभ
टी॰ १ अतिदुःखेनाद्वारोयं २ दोषः ३ विष्णुः ४ ऽत्रमतिः ५ त्याज्यप्रायः

वतिभगवद्भक्तिमासाद्यहृद्यां आक्रांतापिप्रबलभुजगैःकंटकैरप्यनल्पैः किंनादत्यासुरभिकुसुमाकेतकीभाग्यभाजां २ इ
त्यन्यतोभिक्रामन्संमंतादवलोक्यसांजलिबंधं क्रियासार्थितवेदेभ्योग्राह्यच्छ्रुतीर्बहून् पांड्यचोलनिवासिभ्यःपंडितेभ्योन
मोस्तुवः ३ कृ॰ सत्यंपुनर्मह्यमराणामप्येषांनरोन्वतेनमस्क्रिया यदेतेषु मिथ्यावादिन एव बहुलमुपलभ्यंत अमी खलु प्रामा
णिकमप्यर्थंदूरीकृत्याप्रामाणिकमर्थमुररीकुर्वंति तथाहि प्रत्यक्षगोचरमशेषमपिप्रपंचं मिथ्येति मायिन इमे प्रतिपादयंति
सर्वप्रमाणसरणीमनिवर्तमानंब्रह्माश्रयंतिन्चपरंबतनिर्विशेषं ४ पुनःसरोषं हंतब्रह्मबंधवइमेब्रह्मणेपिपरस्मै द्रुह्यंति यतःय
देवसर्वज्ञमपास्तदोषंभवार्तिहारिश्रुतमागमांते अज्ञंपरंब्रह्म तदेवभुंक्ते संसारतापानितिसंगिरंते ५ नकेवलममीपरस्मैद्रुह्यं
ति किंतुतत्प्रमाणेभ्यःश्रुतिभ्योपियतः मिथ्यार्थावेदकत्वाच्छ्रुतिषु कुमतिभिः कर्मकांडे निरस्तप्रामाण्येब्रह्मकांडेसहगुणवत्त्व
नैःशेषितोब्रह्मशब्दः मिथ्यार्थास्मिन्विभक्तिःप्रकृतिरपिपरंब्रह्मनैवाभिधत्तेवाच्यत्वानाश्रयत्वात्कथमुपनिषदांमौनतांजानतांते ६ पर
मेतेश्रुतिभ्योनद्रुह्यंति किंतुशारीरकायाअपि पराशरभुवाशास्त्रंतत्प्रज्ञानायनिर्मितं असमंजसतांनीतमहोतैर्ब्रह्मवादिभिः ७ 

टीप॰ १ गुणशून्यं २ दुर्जनाः ३ वेदांते ४ अभिधेयशून्यासंख्याकारकाद्यर्थाभावात् ५ प्रामाण्यं

किंच यादृशःस्वभावःसर्वेश्वरस्तद्विपरीतमेवतमुशंतिविरुद्धमतयएते सर्वज्ञमज्ञइतिसर्वपदाभिधेयंकस्याप्यवाच्यइतिसर्वमहागु
णानां स्थानंच निर्गुणइतीहसमस्तवेदवेद्यंत्ववेद्यइतितंजगदीशमाहुः ८ किंबहुना विविधदुरितव्रातस्फीतस्थिरव्यसनाकुलाद
तिमितमतेर्जीवादेवाभिदांपरमेशितुः अपगतपरिच्छेदामोदांबुधेरुपगच्छतांमशकशिशुकाभेदोनस्यात्कुतोमंदहस्तिनः ९ अप
रंच दृश्यंमिथ्यादृष्टिकर्तापिमिथ्यादोषोमिथ्येत्येवयाधीरमीषां साधिष्ठानांशेपिकिन्नेतिचिंताःसाधिष्ठानांपंडितानामुदेति १०
वि॰ वयस्यैमेवंमहीसुरदूषणेषु विजृंभिष्ठाः पारंपर्येणआगतेनानिजकुलेपंथानहातव्यइत्यहेतंपरिगृह्यहंतजगतोमिथ्यात्वमाचक्षतां
अध्येतुं निगमानशेषतइमान्कर्माणि निर्मातुमप्यास्तिक्याच्चतुरानिकाममितरेकेतावदेतादृशाः ११ किंच श्रुतीरध्येतारःकि
मपिवदितारःप्रतिदिनंक्रतूनांहर्तारःकिमपिजपितारोमनुगणं अमीस्मार्ताश्चाश्यान्यपिरचयितारोविधुनतेश्रुतेरप्रामाण्यम्प्रसज
दननुष्ठापकतया १२ कृ॰ समंतादवलोक्यनिस्तुलाअमीविषयाःशैवप्रचुरतयानश्लाघामर्हंति अत्रहि तत्त्वहितपुरुषार्था
नयथावस्थितानभिदधानाःशैवाविदुषोपिविमोहयंति तथाहि मदनजनकेवीतातंकेमहागुणसेवधौपरमपुरुषेनित्यासक्तांश्रु

टी॰ १ तर्कयंति २ अधिष्ठानसहिते ३ उत्तमानां ४ उच्चतामाभूरित्यर्थः ५ त्याज्यः ६ संपादयितारः ७ मंत्रः ८ प्रसक्तं

तिंकमलामिव चतपशुपतेःशूलोपेतेमनोभवदाहकेनिहितहृदयांशैवाजल्पंत्यभाग्यहताइव १३ सूरादारोग्यमिच्छेत्कमपिहुतवहा
त्संपदुल्लासमिच्छेदीशानान्ज्ञानमिच्छेदनवधिविभवंमोक्षमिच्छेन्मुकुंदात् इत्याद्याःसत्यवाद्यादिमसुनिभणितीराकलय्यापिविष्णोःसेवां
शैवास्त्यजंतोबतभवहननंयेभावयंतेभवंते १४ अपिच नहिविष्णोःपरमंपदंहिनमसःपारेसदापश्यतासांद्रंसूरिगणेननिर्मलमहानंदात्मकं
शाश्वतं अप्रेप्संतइमेस्मैतमनिशंवेतालभूतालिभिर्लोकंभीकरमंचितुंव्यवसितामाहेश्वरंनश्वरं १५ वि॰ सरेखगुणग्रहणकुतूह
लीभूयाः नित्यंकर्मसमाचरंतिनिगमान्शास्त्राणिचाधीयतेसंतन्वंतिचसत्तंतुनिचयंधिन्वंतिभक्त्यातिथीन् सांवंत्र्यंबकमर्चयंतिशुचयः
शैवाःसंदेवादरादेषामीदृशधर्मणांकतिपयेदोषाविषज्ञानकिं १६ अन्यच्चश्रोतव्यं स्मरहरपरिचर्यासांप्रतंतन्यतेयाजनयतिहरिभक्तिं
हंतजन्मांतरेसा शमितदुरितवर्गासाचसूतेपवर्गंकुतइवफलहानिःकुर्वतांशार्वपूजां १७ परंतु सारुद्रभक्तिर्वितनोतिभद्रंयावि-
ष्णुविद्वेषलवासहिष्णुः नएवधर्मायभवंतिदाराःकदापियान्नाभिमृशंतिजाराः १८ शेषशायिद्वेषुएवहिमूर्धाभिषिक्तोदोषःपुरु
षाणां पश्य. नास्तिक्यमावहतिनारकमातनोतिप्रोढींनिहंतिपरिलुंपतिसंपदंच आयुःक्षिणोत्युपचिनोतिचसर्वदोषान्द्वेषोमुकुंद 
टी॰ १संसारनिवृत्त्यै २अनिच्छंतः ३युक्तं ४कृतनिश्चयाः ५तर्पयंतिभोजनादिना ६प्रसिद्धः ७पोषयति.

विषयोविषयोगलुल्यः १९ कृ॰ तथ्यमेतत्तथाप्यवैदिकव्रतेष्वेवप्रयततांशिवभक्तिमभिनयतांपाषंडविशेषाणामेषांवेषएवभीषयति
हृदयं तथाहि श्रिताभव्यमार्गाश्चिताभस्मश्मश्रुष्यन्निदालाजटालास्फुटालापशून्याः स्मशानाग्निसंरब्धादृशानिर्दहंतःपिशाचाइवामी
दिशासूत्रमंति किंचैषामनिजुगुप्सितारीतिः पक्षीकृत्यगिरिशंसिध्यारहिताश्चमौनहीनाश्च इच्छंत्यधिगंतुमिमेधनंजयंलिंगदर्शने
नैव २० अन्येचात्र दीर्घवक्रनखरंखरकल्पाउद्धरंतइवबाहुयुगंते शौचमाचरितुमप्यसमर्थानीचबुद्धिहृदयाविहरंति २१ वि॰
विमृश्यसरेखगुणग्राहिणानैतेपिदूषणीयाः शीतोष्णजृंभणसहेषुजितेंद्रियेषुकष्टोपवासपरिशुष्ककलेवरेषु पुण्यस्थलाटनपराकृतकि
ल्बिषेषुजानीहिकानपिगुणानजटिलेष्वमीषु २२ इत्यन्यतोवीक्ष्यसाशंकं कइमेपुस्तकहस्ताःकाल्पएवोत्थायत.नइतःपर्यटंति कृ॰
निपुणमवलोक्यसपरिहासं ज्योतिःशास्त्रमहोदधौबहुतरोत्सर्गापवादात्मभिःकल्लोलैर्निबिडेकणान्कतिपयान्लब्ध्वाकृतार्थाइव
दीर्घायुःकृतसंपदादिकथनैर्दैवज्ञपाशाइमेगेहंगेहमनुप्रविश्यधनिनांमोहंमुहुःकुर्वते २३ किंच विलिखतिसदसद्वाजन्मपत्रंजना
फलतियदितदानींदर्शयत्यात्मदाक्ष्यं नफलतियदिलग्नंद्रष्टुरेवाहमोहंहरतिधनमिहैवंहंतदैवज्ञपाशः २४ अपिच प्रमोदेखेदे
टी॰ १मुकुंदसंबंधी २अमंगल ३अत्यारक्तयेत्यर्थः ४अभिध्यायपक्षंकृत्वा ५अनुमानसिद्धिःअप्रसिध्यन्न्यतमी ६सत्कारःअनुमानंच ७अग्निं, धनंजयंचेतिपृथगपि.

वाप्युपनमतिपुंसोविधिवशान्मयैवंप्रागेवाभिहितमितिमिथ्याकथयति जनानिष्टानिष्टाकलनपरिहारैकनिरतानसौमिषादीनां परिगणनयैवभ्रमयति २५ अस्तुवातथ्यवादीदैवज्ञस्तथापिवृथातदुक्तश्रवणं तथाहि अस्तुखमथस्तुखंवाकर्मणांपक्तिवेलास्विहहनियतमेतेभुंजतेदेहभाजः नदिहपुरतएवप्राहमौहूर्तिकश्चेत्कथयफलममीषामंततःकिंनतःस्यात् २६ वि॰ ऐहि-कामुष्मिककर्मारंभोपयोगिनोनोपालंभमर्हंतिज्योतिर्विदः श्रृणुतावत् नदेवंनपित्र्यंचकर्मावसिध्येन्नयत्रास्तिदेशेननुज्योतिषज्ञः नतारानचारानवानांग्रहाणांनतिथ्यादयोवायतस्तत्रबुद्धाः २७ यच्चसमर्थितंमौहूर्तिकवचननिरामनंमुधेतितंनि-पुणानभणंति भानोःशीतकरस्यवापिभुजगग्रासेपुरोनिश्चितेतीर्थानामटनंजनस्यघटतेतापत्रयोच्चाटनं इष्टेप्रागवधारितेसनिधूनेस्तुष्टेश्चलाभोभवेत्दृष्टेतुव्यसनेत्रनसरित्हृनिःकर्तुंजयाद्येःक्षमा २८ अविश्रंभश्चदैवज्ञवचनेषुअनुपपन्नः शशिह्रासौकुमुदस्तुहृदःपुष्पवंतोपरागःशुक्रादीनामुदयविलयावित्यमीसर्वदृष्टाः आविष्कुर्वंत्यखिलवचनेष्वत्रकुंभीपुलाकन्यायात्ज्योतिर्नयःगनिविदांनिश्चलंमानभावं २९ इत्थंकिलनीतिविदोविदुः विदेवज्ञंग्रामंविबुधविधुरांभूपतिसभां 

टी॰ १ परिपाकः २ राहुकेतुभ्यां ३ स्थालीपुलाकन्यायेन

मुखंश्रुत्वाहीनंमनुजपतिशून्यंचविषयं अनाचारान्दारानपहरिकथंकाव्यमपिचप्रबन्धुत्वापेतंगुरुमपिसुबुद्धिःपरिहरेत् ३० रू॰ अस्त्वेवमित्यन्यतोवीक्ष्यसोपहासं मिथ्यौषधैर्हतमृषाकषायैरसह्यलेह्यैरयथार्थतैलैः वैद्याइमेवंचितरुग्णवर्गाः पिचंडभांडंपरिपूरयंति ३१ किंच नधातोर्विज्ञानंनचपरिचयोवैद्यकनयेनरोगाणांतत्त्वावगतिरपिनोवस्तुगुणधीः तथाप्येतेवैद्याइवितरलैयंतोजडजनानसून्मृत्योर्भृत्याइववसुहरंतेगदजुषां ३२ अपिच कषायैरुपवासैश्च कृताशुल्लापैनांनृणां निजौषधकृतांवैद्योनिवेद्यहरतेधनं ३३ वि॰ वयस्यविश्वोपकारिषुवैद्येष्वेवंनकलयेथाः पश्य मस्तेदुःसहवेदनाकवलितेमग्नेस्वरेंतर्गलंतत्तायांज्वरपावकेनचतनौतांतेहृषीकव्रजे दूनेबंधुजनेकृतप्रलपनेधैर्यंविधातुंपुनःकःशक्तःकलितामयप्रशमनेवैद्यात्परोविद्यते ३४ किंच मावोधिवैद्यकमथापिमहामयेषुप्राप्तेषुयोभिषगितिप्रथितस्तमेव आकारयत्यखिलएवविशेषदर्शीलोकोपितेनभिषगेषनदूषणीयः ३५ कष्टमहोकृतोपकारेष्यगदंकारेकृतघ्नएवनिर्विवेकोलोकः इत्थंहिकवयःकथयंति निर्दंताध्वरकृत्यकृत्विजमहोत्तीर्णापगोनाविकंयुद्धांतंसुभटंचसिद्धविजयोवोढारमाप्तस्थलः रक्षंवारवधूजनंचकितवोनिर्घृष्टनद्योवनोध्वस्ता

टी॰ १ देशः २ रोगिवर्गः ३ उदरभांडं ४ आमयंतः ५ नीरोगतां ६ मस्तके ७ म्लाने ८ दुःखिते ९ शकटाश्वादिपालकं

तं कचयश्चिकित्सकमपिद्दिष्टिप्रदेयोर्थिनं ३६ रू॰ विमानमग्रतश्चालयन् अग्रतोवलोक्यसोपालंभं सखेपश्यात्रकवीना
मिषांशास्त्रैर्विप्रतिषिद्धांचर्यां श्रीनाथस्तवनानुरूपकवनावाणींमनोहारिणींकष्टंहाकवयःकदर्यकुरिलक्ष्मीपालसात्कुर्वते दू
रीपाहतसारसैंधवपयोदेवाभिषेकोचितंसंसेकेविनियुंजतेस्रमतयःशारवालवालस्यकिं ३७ किंच स्रुवद्भवनिवर्तकेसनिहृ-
रीकविःसूक्तिभिःकरोतिवरवर्णिनीचरितवर्णनंगर्हितं अनीतिरवनीपनिर्बतश्रुनीननुंमौक्तिकैर्विभूषयतिदेवतामुकुटभागयोग्यै
र्यथा ३८ वि॰ आंतरध्वांतरवयःकवयस्त्वयानाधिक्षेप्याः कामंवाचःकतिचिदफलाःसंतुलोकेकवीनांसंत्येवान्यामधुरिपुकथा
संस्तवात्कामदोग्ध्र्यः वित्तंकामंभवतुविफलंदत्तमश्रोत्रियेभ्यःपात्रेदत्तैर्भवतिहिधनैर्धन्यताभूरिदातुः ३९ कल्याणंभगवत्क-
थाकथनतःकाव्यंविधातुःकवेस्तस्यैवागतयाकचिद्रचयतःशृंगारवीरादिकं कोदोषोभविनायदत्रकविताशीलैःसमाश्रीयतेपंथाव्या
सवसुंधराश्रुतिभवग्रंथादिषुप्रेक्षितः ४० रू॰ नरस्तुतेर्विधातारोनवस्तुतइमेबुधैः श्लाघनीयाइतिकवीन्शास्त्रौध्वन्योवि-
निंदति वि॰ धनचपलसकलपुरुषसाधारणमिदंदूषणमविवेकिभिःकविष्ववकेवलमाधीयते यतः पद्यैर्हृद्यतमैस्तवंतिक ४६

टी॰ १कृपणाः २नृपवर्णनपरां ३वसुंधराश्रुतिर्लक्षणयावल्मीकंतत्रभवोवाल्मीकिः ४शास्त्रमार्गसंचारी

वयःप्रायेणपृथ्वीपतीनन्येतान्स्तुवतेवचोभिरत्नमत्कारैरसारैरपि पद्यारंभणशान्त्यशक्तिविहितोभेदःकवीनांभवत्यन्ये
षांचपरंनरस्तुतिकृतोदोषश्चसार्वत्रिकः ४२ क्षणमालोक्य सादरं प्राचेतसव्यासपराशराद्याःप्राचःकवींद्राजगदंचिता
स्ते गोष्ठीनवीनापिमहाकवीनांपूज्यागुणज्ञैर्भुवनोपकर्त्री ४३ तथाहि माघश्चोरोमयूरोसुररिपुरपरोभारविःसारविद्यः-
श्रीहर्षःकालिदासःकविरथभवभूत्याह्वयोभोजराजः श्रीदंडीडिंडिमाख्यःश्रुतिमुकुटगुरुर्भल्लटोभट्टबाणःख्याताश्चान्येसुबं-
ध्वादयइहकृतिभिर्विश्वमाल्हादयंति ४४ परंतु संपन्निर्मदभावयोरनघयोःसाहित्यपांडित्ययोःसामर्थ्यान्यजनोपकारकृत
योःसाम्राज्यदाक्षिण्ययोः औदार्यप्रियवाद्योश्चकथयंत्याचारविज्ञानयोःसामानाधिकरण्यमेवविबुधोत्तंसप्रशंसास्पदं ४५
इदंचावधेयं प्रणतचरणरेणुविष्णुचित्तोशठमथनःसरसीमुनिःसभूलः मधुरकविरितोपरेचधन्याःकतिनपुनंतिजगंतिसूक्ति
पूरैः ४६ रू॰ परतोविमानंप्रस्थाप्यपार्श्वतोदृष्ट्वा पद्येनानाग्रहिणःपुरुषान् यदेतेव्यर्थमेवन्यायग्रंथसंततचिंतनेनविश्रा
म्यंति तथाहि कर्मब्रह्मविचारणांविजहतोभोगापवर्गप्रदांघोषंकंचनकंठशोषफलकंकुर्वंत्यमीतार्किकाः प्रत्यक्षंनपुनातिना

टी॰ १मदरहितयोः २दानशौंडत्वं

पहरतेपापानिपीलुच्छटाव्याप्तिर्नावतिनैनैवपात्यनुमितिर्नोपक्षतारक्षति ४७ किंच हेतुःकोपिविशिष्टधीरनुमितौनज्ञानशु
ग्मंमरुत्वौचोनेतिंचमोहवादमुखरानैयायिकाश्चेद्बुधाः मेषस्याडमियत्पलंबलिभुजोदंताःकियंतस्तथेत्येवंसंततचिंतनैःश्र
मजुषोनस्युःकथंपंडिताः ४८ विशिष्यंचैतस्यशुष्कतार्किकस्यरीतिर्निर्विवेकिनामुपहासास्पदं शृणुतावत् नजिप्रत्याम्नायं
स्वशानिनतदंगान्यपिसत्कृत्पुराणंनादत्तेनगणयतिकिंचस्मृतिगणं पठन्शुष्कंतर्कंपरपरिभवार्थोक्तिभिरसौनयत्यायुःसर्व-
निहितपरलोकार्थयतनः ४९ अपिच प्रयत्नैरस्तोकैःपरिचितकुतर्कप्रकरणाःपरंवाचोवश्यान्कतिपयपदोघान्विदधतः
सभायांवाचाटाःश्रुतिकटुरटंतोघटपटान्नलज्जंतेमंदाःस्वयमपितुजिह्रेतिविबुधः ५० वि० वयस्यविविधोपकारविधायका
न्नैयायिकान्मावमंस्थाः शृणु मोहंरुणद्धिविमलीकुरुतेचबुद्धिंसूतेचसंस्कृतपदव्यवहारशक्तिं शास्त्रांतराभ्यसनयोग्यतया
युनक्तितर्कश्रमोनतनुतेकिमिहोपकारं ५१ तथाहि प्रायःकाव्यैर्गमितवयसःपाणिनीयांबुराशेःसारज्ञस्याप्यपरिकलितन्या
यशास्त्रस्यपुंसः वादारंभेवदितुमनसोवाक्यमेकंसभायांमूकाजिह्वाभवतिकियतीपद्यकष्टामवस्थां ५२ किंबहुना अप- ४७
टी० १ परमाणुसमुदायः २ व्याप्तिविशिष्टपक्षधर्मताज्ञानविशिष्टः ३ पूर्वोक्तगतांशाहृयम् ४ त्वगिंद्रियप्रत्यक्षः ५ काकः ६ लज्जते

रीक्षितलक्षणप्रमाणैरपरामृष्टपदार्थसार्थतत्वैः अवशीकृतजैत्रयुक्तिजालैरलमेतैरनधीततर्कविद्यैः ५३ निरूप्य अ
द्भुतस्तर्कपाथोधिरगाधोयस्यवर्धकः अक्षपादोनमस्पृष्टस्वकलंकःकलानिधिः ५४ पुनरालोच्यसश्लाघं ज्ञानाब्धिरक्षि-
चरणःकणभक्षकश्चश्रीपक्षिलोप्युदयनःसचवर्धमानः गंगेश्वरःशशधरोबहवश्चनव्याग्रंथैर्व्यरुध्यतइमेहृदयांधकारं ५५
रू० अपरत्रव्योमयानंप्रस्थापयन् अग्रतोनिरीक्ष्यसोपालंभं मीमांसकाःकतिचिदत्रमिलंतिवेदप्रामाण्यसाधनकृतोपिन
तभिवंद्याः उद्घोषितोप्युपनिषद्भिरशेषशीर्षैर्ब्रह्मैवनाभ्युपगतःपुरुषोत्तमोयैः ५६ विशिष्यचमीमांसकानांगोष्ठ्यांविश्रुताः
शबरादयःशाबरादयइवभगवद्भक्तानांविनिंदनीयाःतिमीमांसाशास्त्रलोकप्रसिद्धाःसर्वर्षिणांसेहिरेनैवसत्तां चैतन्यस्यापिन्हवं
देवतानांचकुर्विश्वंनश्वरंमन्यमानाः ५७ वि० सखेनिखिलनिगमार्थनिर्धारणबद्धादरेषुमीमांसकेषुमास्मसन्नह्येथाः शृणु
आदौधर्मेप्रमाणंविविधविधिभिदाशेषतांचप्रयुक्तिंपौर्वापर्याधिकारौतदनुबहुविधंचातिदेशंतथोहं बाधंतंत्रंप्रसंगंनयन
नयशतैःसम्यगालोचयद्भ्योभिन्नामीमांसकेभ्योविदधतिभुविकेसादरंवेदरक्षां ५८ पश्यतावद्भगवतइवजैमिनिशासनं
टी० १ अज्ञातपदार्थसमूहतत्वैः २ जययुक्ति ३ राहुः अज्ञानंच ४ प्रतीतपदार्थैःसहाविचाल्यः ५ सएवब्रह्मइति ६ लोपं

वैदिकैः सर्वैरनतिक्रमणीयं नैयायिका वा ननु शाब्दिका वा त्रयीशिरःकृतश्रमशालिनो वा वादाहवे विभ्रतिं जैमिनीयन्यायोपरो
धे सति मौनमुद्रां ५९ यच्च मीमांसकेषु दोषोद्घाटनं तदज्ञानतः भगवदनभ्युपगमनं दैवतचैतन्यनिन्हवश्चैषां कर्मश्रद्धावर्ध
कनप्राधान्यप्रदर्शनायैव ६० पुनरालोच्य सबहुमानं आगमरूपविचारिण्य धिकरणसहस्रशिक्षित विपक्षे स्वामिनि-
जैमिनियोगिन्यपरज्यति हृदयमस्मदीयमिदं ६१ शाबरकुमारिलगुरवो मंडनभवदेवपार्थसारथयः अन्येच विश्वमान्या
जयंति संत्रायमाणतंत्रास्ते ६२ कृ० अखिलनिविमानमन्यतो गमयन्नूपार्श्वनोद्दृष्टासोपहासं टिट्टिभाणन्नृहृदयसच्चुटुडुसिड:
सोस्तिपृतसूझिसिपृतथृथमिपृवसूमसूताहसिन्चष्टुनाष्टुरनइञ्ञ्शाच्छोद्ध्वोंत्यादिटि लोपो व्योर्वलि वृद्धिरेचि यच्चिभं दाधा
घ्वदापृच्छिन्चटेरित्यव्दान्न खिलान्नयं तिकृति चिच्छब्दानूपठंतः कटून् ६३ किंच सूत्रैः पाणिनिकीर्तितैर्बहुतरैर्निष्पाद्य
शाब्दावलिं वैकंठस्तवमक्षमारचयितुं मिथ्याश्रमाः शाब्दिकाः पक्वान्नं विविधं श्रमेण विविधापूपाग्र्यसूपान्वितं मंदाग्नीननु
रुंधते मितबलानाघ्रातुमप्यक्षमान् ६४ वि० त्रय्याभरणेषु वैयाकरणेषु भवान्मास्म कलयतु दोषशंकेलं यतः कृत ४८

टी० १ वादयुद्धे २ न्यायरूपैप्रतिबंधके ३ लोपं ४ लेशं

दुरितनिराकरणं व्याकरणं चतुरधीरधीयानः बुधगणगणनावसरे कनिष्ठिकायां परं जयति ६५ पातंजले विष्णुपदापगायाः पा
तंजले चापि नयेव गाहम् आन्वीक्षते शंकृद्धिदमाभ्रसूनेरान्वक्षते रागमधोक्षजेच ६६ अपि च नृणामनभ्यस्तफणाभृदीशगिरां दुरापा
बुधराजगोष्ठी अबुध्यचापश्रुतिपद्धतीनां युद्धक्षमेवोस्तनयोधसार्था ६७ तथाहि नागीकृतव्याकरणो षधानामपाटवं वा निरू
गाढमास्तं कस्मिंश्चिदुक्तेतुपदेकथंचित्स्वैरवपुः स्विद्यति वेपतेच ६८ कृ० साक्षेपं कथं सरवेशानकोटिपाणिनिगदितादपि पाणि
निगदितमेव व्याकरणमाद्रियंते संतः वि० पाणिनीयमेव हि व्याकरणं प्रयोगौपयिकं प्रविद्वाद् मतीनि कारणमिति तत्रैवादरः पंडितानां
तथाहि सूत्रं पाणिनिबद्धं कलयन्पुरुषः समुद्वहन्निरूढग्राम् वर्णादीनां धर्मान्बुध्वा विधिवत्प्रयुंक्ते सो ६९ इति विमानं अन्यनश्चालयन्पुरो
वलोक्य सखेपत्रयस्छांदसानर्थचापलेन विश्रीयमाणाश्चायान् आः कष्टमप्रहृष्टाः शिशअपि वित्तचापलाविष्टाः अध्यापयंति वेदाना
दायचिराय मासिमासि भृतिम् ७० वि० वयस्यैमेवं वादीः नाध्यापयिष्यन्निगमान्श्रमेणोपाध्यायलोकायदि शिष्यवर्गान् निर्वेदवादं
किल निर्विंतान सुर्वीतलं हंततदाभविष्यत् कृ० विरुद्धमिदं भाषितं यद्वेदापाये सति नियज्ञाभ्युदयः स्यादिति वि० अवगच्छ तावदेतद वि

टीप १ पातंजले इति पदद्वयं २ वदंति ३ जननादारभ्य ४ मरणानंच ५ धनुर्वेद ६ इंद्र ७ उपयोगी ८ वेतनं

कुह्ममेव नाम्नायज्ञोमखेयस्मिन्यजमाननयास्थितः नत्समागमतःसोपिनाम्नायज्ञोभवेन्नकिम् ७२ कु० पुनरन्यतोदस्वासोपहासम्
पश्येनान्राजसेविनःपरित्यक्तलोकहृद्यसौख्यान्स्पष्टमौख्यान्पुरुषान्नैषांसंध्याविधिरविकलोनाच्युतार्चापिसांगानस्वेकालेहवन
नियमोनापिवेदार्थचिंता नष्टहेलानियतमशनंनापिनिद्रावकाशोनहेलोकावपितनुभृतांराजसेवापराणाम् ७३ वि० दुःसहैषा
बहुजनपोषकाणामेषांनिंदा अशुभपुषिकलावप्यप्रमत्तास्वधर्मादनुदिनमुपकारानाचरंतेबुधानां बहुजनपरिपुष्टोबद्धदीक्षास्त
एनंननुसुखमपिहित्वातन्वतेराजसेवाम् ७४ सर्वाणिदिव्यक्षेत्राण्यवलोक्यसांजलिबंधं कृष्णानुमुद्दिश्य गंगाझरीपरिचितां
श्रिजगन्निदानंरंगादिधामसुचिरात्कृतसन्निधानं विश्वंस्वनेत्रविशदमेवविलोकमानंवंदस्ववस्तुनमदात्रिंहराभिधानं ७५ कु०
नन्वत्रतृतीयचरणार्थोनमह्यंरोचते विलोचनेविभोर्यस्यविख्यातेपुष्पवंतया साक्षात्कर्तुंस्फुटंसर्वंशक्तोतिसकथंहरिः ७६ वि०
सूर्यचंद्रलोचनतयासचमत्कारंचक्रधरंस्तुवानायतुभ्यंनकुप्यामि शृणुतावदिदम् श्रेयस्तोयदसंप्रदायरसिकच्छायःसहाय-
श्रियश्चिंतारत्नसपत्नवीक्षितलवश्चैकीयतामायतम् योविश्वेनहिगात्रवान्हिमरुचाप्युष्णांशुनानेत्रवान्सुग्रीवेणचमित्रवान् ४९

टीप १ नआम्नायज्ञइतिच्छेदः २ नाममात्रेणसयज्ञः ३ अशुभबहुले ४ सूर्यचंद्ररूप या पक्षेक्षिरोगविशेषवत्तया ५ पृथक्पदंकर्म ६ चिंतामणिप्रतिपक्षीभूतः

कुशलवब्रह्मादिभिःपुत्रवान् ७७ सखेसंक्षिप्यवक्ष्यमाणंसारभूत मिममर्थंगृहाण नराःसुरावापद्यावःपरेषानिंदनीयाःपुरु-
षेणभूष्णुना यतोपिदोषप्रचुरेजगत्त्रयेनसंतितेवीतगुणाःकलावपि ७८ कु० अभ्युपगम्य दार्ढ्यायगुणसमृद्धेर्दूषणभणितिः
समस्तवस्तूनाम् अस्माभिरुपनिबद्धासिद्धांतस्यैवपूर्वपक्षोक्तिः ७९ इतिसकलजनानामीरयंतौशुभंतौमधुमथनपवित्रक्षेत्रसे
वाकृतार्थौ अनुपथिदृढसख्यौहंतगंधर्वमुख्यौनिजसदनमगातांनिर्भरानंदसांद्रौ ८० सकलकुशलसिध्यैसर्वदेवस्थलेषुव्रज
तुभवविवृद्धिंवत्सराद्युत्सवश्रीः अपगतभवरोगैरध्वराणांप्रयोगैरखिलशुभकराणामस्तुभद्रंद्विजानाम् ८१ जयतुजगतिलक्ष्मण
यपक्षोजयतुवचःश्रुतिमौलिदेशिकानाम् जयतुनिगमवर्त्मनिःसपत्नंजयतुचिरायमुरारिरंजनाद्रौ ८२ प्रकाशदोषप्रचुरेप्यमुष्मि
न्ग्रंथेमदीयेकरुणानुबंधात् प्रसादवंतोनकृशानवंतुपरंतुविश्वावसवंतुसंतः ८३ इतिश्रीपंचमतभंजननिबंधनव्याख्यातृतातय
ज्वभागिनेयवाजपेयसार्वप्रष्ठाप्तोर्यामादियज्वात्रेयवंशमौक्तिकीभवदप्ययाचार्यनप्तृभवश्लेषयमकचक्रवर्तीरघुनाथाचार्यदीक्षित
तनयस्यश्रीमद्वेंकटाध्वरिणःकृतौविश्वगुणादर्शःसमाप्तः॥ श्रीः ॥छ॥ ॥छ॥ ॥श्रीकृष्णार्पणमस्तु॥ ॥छ॥

टीप १ अभ्युदयेच्छुना २ प्रापयंतौ ३ पुरोभागिनःनभवंतु ४ किंतु विश्वावसुसदृशाःसंतुगुणग्राहिणइति·

॥एषविश्वगुणादर्शःस्पर्शानर्हकुमारकैः॥ निरान्मालिन्यमानिन्येदुर्लिप्युल्लेखनादिभिः॥१॥
॥सकष्टैरधुनामृष्टःशिष्टानांदृष्टितुष्टये॥ सरीसृष्टादर्थसृष्टिमपिकर्णेषुभाविनीम्॥२॥
॥अनंतननयेनायंश्रीमत्त्र्यंबकवासिना॥ लेलेइत्युपराभिख्याविख्यातेनांकितोमले॥३॥
॥मुंबापुरशिलायंत्रेज्ञानदर्पणनामके॥ वेसुद्वीभूमितेशाकेपरिधाव्याब्दहायने॥४॥
॥गोपादनेनात्मतनप्रयत्नस्तनयित्नुना॥ तडिद्धत्तांडवंतन्वच्छिरवंडाडंबरंमहः॥५॥

॥मुंबईतज्ञानदर्पणछापरवान्यांतछापिलें॥

शके १७७४ परिधावी॰



| पत्रे अंक | पत्रे सांक | पंक्ति | अशुद्ध | शुद्ध | पत्रे अं· | पत्रे सांक | पंक्ति | अशुद्ध | शुद्ध | पत्रे अं· | पत्रे सांक | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | १ | ८ | विवेक | विबोक | · | १८ | ७ | उज्रंभन | उज्जृंभन | २४ | · | ४ | मुगुट | मुकुर |
| | १ | ८ | छांदस | च्छांदस | · | १८ | ७ | अंचन् | अंचन् | २४ | · | ५ | नापिछ | नापिच्छ |
| २ | · | ६ | त्रैय्येव | त्रय्येव | · | २० | १ | बिबंत्ये | पिबंत्ये | २४ | · | ६ | अंबुरछायः | अंबुदच्छायः |
| २ | · | ८ | रुदैद्वाह | उदैद्वाह | · | २० | १ | लंक्केश | लंकेश | २४ | · | ६ | मवातः | मवात |
| ५ | · | ५ | दानं | दान | · | २० | १ | नद्देषु | निद्देषु | २५ | · | ७ | शयन | शयान |
| · | १० | ५ | ग्रहे | गृहे | २१ | · | १ | गहगम् | गहनम् | २५ | · | ९ | सपन्न | सन्न |
| · | ११ | १ | पूर्वम् | पूर्वम् | २२ | · | १ | किमिति | किमित | · | २४ | ५ | सरसि | सरसी |
| १२ | · | २ | कौसला | कोसला | · | २२ | १ | चक्रोज्वलं | चक्रोज्ज्वलं | · | २४ | ८ | आलयो | आलये |
| १४ | · | टीप | विष्णुभक्तिपीडकाः | शिवविष्णुभवनविध्वंसिनः | · | २३ | ७ | नंतसराः | नंतसरः | · | २५ | ९ | मदमेत्तमेवं | मंदमतेमैवं |

| पत्रे | | पंक्ति | अशुद्ध | शुद्ध | पत्रे | | पंक्ति | अशुद्ध | शुद्ध | पत्रे | | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अनंक | सांक | | | | अनं. | सांक | | | | अनं. | सांक | | | |
| | २५ | २ | अनुरुध्यते | अनुरुधते | २९ | · | ५ | मन्नासि | मेना | ३२ | · | ८ | नसि | तसिन् |
| २६ | · | १ | गिरवो | मृदवो | ३० | · | ५ | रुध्यना | रुध्यना | · | ३३ | २ | प्रतिछना | प्रतिच्छन्ना |
| · | २७ | २ | रज्यति | रज्जति | · | ३० | २ | वंधार्पत | वंधापत | · | ३३ | ५ | नैच्यमिक | नैयमिक |
| · | २७ | ६ | नागराजी | नागराजिः | ३१ | · | ३ | क्रात्या | कृत्या | · | ३३ | ६ | मुरवंचैरवरी | मुरवमुरवंचैरवरी |
| · | २७ | ८ | सीत | शीत | ३१ | · | ३ | दृपः | तुसा | ३४ | · | २ | तरंगिणि | तरंगिणी |
| · | २७ | ९ | शकला | शकल | ३१ | · | ८ | प्रसज्जति | प्रसजति | ३४ | · | ५ | क्वांतं | कांतं |
| २८ | · | ४ | सिरसि सीत | शिरसिशीत | · | ३१ | २ | छाग छिदा | छागच्छिदा | ३४ | · | ७ | वराल | वरालं |
| २८ | · | ८ | पपा | पंपा | · | ३१ | ८ | विमानयन् | विमानमानयन् | · | ३४ | ५ | पिवंते क्षामे | पिबंतोक्षाम |
| · | २८ | ७ | नाप्स्यद्या | नाप्स्यन्दयां | ३२ | · | ५ | सज्ये | राज्ये | · | ३५ | ८ | भिलासे | भिलाष |

| पत्रे | | पंक्ति | अशुद्ध | शुद्ध | पत्रे | | पंक्ति | अशुद्ध | शुद्ध | पत्रे | | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अनंक | सांक | | | | अनं. | सांक. | | | | अनं. | सांक. | | | |
| ३७ | · | ५ | दर्सो | दर्स | · | ४० | २ | लैव | लैब | ४४ | · | १ | यारशास्त्व | यारशास्त्व |
| · | ३७ | १ | सरोजछदा | सरोजच्छदा | · | ४० | २ | रुतान्यलोपा | रुतान्यन्नादी | ४४ | · | ८ | अहित् | अहित |
| · | ३७ | ६ | भवतःपन्न | भवतःप्रपन्न | · | ४० | ३ | महास्य | माहात्म्य | ४५ | · | ६ | कास्य | कस्य |
| · | ३७ | ८ | रजत्व | रजच्छ | · | ४० | ५ | महात्म्य | माहात्म्य | ४५ | · | ८ | जना | जनानां |
| · | ३८ | ३ | यदीह | यदिह | · | ४० | ७ | अभ्युपगच्या | अभ्युपगम्या | · | ४५ | ५ | तंनि | तन्नि |
| · | ३८ | ३ | भिषिकेण | भिषेकेण | · | ४१ | ९ | द्राधिष्ट | द्राधिष्ठ | ४६ | · | ६ | प्रशमने | प्रशमनो |
| ३९ | · | ९ | चोल | चोल | ४२ | · | ४ | महर्षमहर्ष | महर्षिमहर्षि | · | ४६ | १ | प्रदेयो र्थिनं | प्रदेयार्थिनं |
| · | ३९ | ८ | शार्ङ | शार्ङ्ग | · | ४२ | ८ | पुनरसि | पुनरति | · | ४६ | २ | बना | बनां |
| ४० | · | ४ | विरुद्धना | विरुद्धनां | · | ४३ | ५ | निर्विशेष | निर्विशेषं | · | ४६ | ५ | कृथा | कथाः |

इतिविश्वगुणादर्शस्यशुद्धिपत्रंसमाप्तं